# अथ साम्बपुराणम्

## मङ्गलाचरणम्

तिमिरकरिकिरातः प्रत्यहं सप्रभावः
कमलविपिनबन्धुः पुण्यकारुण्यसिन्धुः
भवनभुवनदीपः कुष्ठपापप्रदीपः
सुरभुनिकृतसेवः पातु वो भानुदेवः
सूत उवाच
शृण्वन्तु ऋषयः सर्वे साम्बाख्यं पापनाशनम्
पुराणं सर्वरोगघ्नं परं कल्याणदायकम् १
अत्र नानाविधा पूजा सूर्यस्य च महात्मनः
पितुः शापो हि साम्बस्य नारदस्तत्र कारणम् २
शापस्यानुग्रहं चैव तथा पुरनिवेशनम्
मण्डलस्य प्रमाणं हि भ्रमेरारोपणन्तथा ३
तेजसां शातनञ्चैव तथा सूर्यस्तवोऽपि च
सूर्यस्य च ततो नूनं प्रतिमास्थापनन्तथा ४
मगानयनमत्रैव मगमाहात्म्यमेव च
पूजाविधिं रवेस्तत्र पूजा निष्ठा तथैव च ५
मन्त्राभिषेकश्चैव मन्त्रवादस्तथैव च
उत्पत्तिं च लयं चैव भूतसर्गानुवर्णनम् ६
साङ्गोपाङ्गसमाहारः तिथिपूजाप्रवर्तनम्
वश्याकर्षणविद्वेषस्तम्भनोच्चाटनादिकम् ७
प्रतिमालक्षणं चैव पूजावासविधानकम्
मण्डलं निष्क्रियायागसिद्धि योगाश्च साधनम् ८
महामण्डलयागश्च सान्निध्यं द्वादशात्मनः
भ्रमेरारोपणं चैव पुष्पधूपविधिस्तथा ९
प्रोक्षणं पञ्चदानस्य फलं पञ्चप्रकीर्तितम्

वेलाकोणविधानञ्च अर्कधर्मविधिस्तथा १०
धूपकर्मविधिश्चैव उपस्थानं यथाविधि
प्रयताप्रयतश्चैव तथा स्वर्गानुवर्णनम् ११
प्रायश्चित्तविधानञ्च तथा चार्ध्यस्य लक्षणम्
दक्षिणं सर्वशिष्याणां मन्त्रग्रन्थविनिश्चयः १२
स्तवाश्च विविधाश्चैव ग्रन्थे चास्मिन् समासतः
भविष्यन्ति यथान्यायमध्याया विविधाश्रयाः १३
इति श्री साम्बपुराणेऽनुक्रमणिकाऽध्यायः समाप्तः

## प्रथमोऽध्यायः

सूत उवाच
वशिष्ठं स्वस्थमनसमृषिं राजा बृहद्बलः
रघुवंशोद्भवोऽपृच्छत् गुरुं निश्रेयसं परम् १
भगवन् श्रोतुमिच्छामि परं ब्रह्म सनातनम्
यस्मान्न पुनरावृत्तिं प्राप्नुवन्ति मनीषिणः २
गृहस्थो ब्रह्मचारी वा वानप्रस्थोऽपि भिक्षुकः
यदीच्छेन्मोक्षमास्थातुं देवतां कां यजेत सः ३
कुतो ह्यस्य ध्रुवः स्वर्गः कुतो निःश्रेयसं परम्
स्वर्गतश्चैव किं कुर्यात् येन न च्यवते पुनः ४
देवतानां हि को देवः पितॄणामपि कः पिता
यस्मात् परतरं नास्ति तन्मे ब्रूहि महामुने ५
कुतः सृष्टमिदं ब्रह्मन् विश्वस्थावरजङ्गमम्
प्रलये च कमभ्येति तद्भवान् वक्तुमर्हति ६
वशिष्ठ उवाच
उद्यन् य एष कुरुते जगद् वितिमिरं करैः
नातः परतरो देवः कश्चिदन्यो नराधिप ७

अनादिनिधनो ह्येष पुरुषः शाश्वतोऽव्ययः
तापयत्येष लोकांस्त्रीन् भ्रमन् रश्मिभिरुल्वणैः ८
सर्वदेवात्मको ह्येष तपसां वाशुभावनः
सर्वस्य जगतो नान्यः कर्मसाक्षी विभावसुः ९
संक्षिप्यत्येष भूतानि तथा विसृजते पुनः
एष भाति तपत्येष कर्षते च गभस्तिभिः १०
एष धाता विधाता च भूतादिभूतभावनः
तपत्येष क्षयमायाति नित्यमक्षयमण्डलः ११
पितॄणां हि पिता ह्येष देवनामपि देवता
ध्रुवं रथयुतो ह्येष यस्मान्न च्यवते पुनः १२
सर्गकाले जगत्कृत्स्नमादित्यात् संप्रसूयते
प्रलये च समभ्येति आदित्यं दीप्ततेजसम् १३
योगिनश्चात्र सांख्याता देहं त्यक्त्वा पुरातनम्
संसिद्धाश्च विशन्त्यस्मिन् तेजोराशौ दिवाकरे १४
अस्य रश्मिसहस्राणि शाखा इव विहङ्गमाः
वसन्त्यस्मिन्नसुरयः संसिद्धा दैवतैः सह १५
गृहस्था जनकाद्याश्च राजानो योगधर्मिणः
वालखिल्यादयश्चान्य ऋषयो ब्रह्मवादिनः १६
वानप्रस्थाश्च व्यासाद्या भिक्षुः पञ्चशिखस्तथा
योगमाख्यायते सर्वे प्रविष्टाः सूर्यमण्डलम् १७
शुको व्यासात्मजः श्रीमान् योगधर्मागमतापसः
आदित्यकिरणान् पीत्वा अपुनर्भवमास्थितः १८
श्रद्धयात्र श्रुतिमुखा ब्रह्मविष्णुशिवादयः
प्रत्यक्षोऽयं यतो देवः सूर्यस्तिमिरनाशनः १९
तस्मादन्यस्य भक्तिर्हि न कार्या शुभमिच्छता
रुष्टेन बाध्यते यस्मादिष्टं नित्यमेव हि २०

त्वयातः सततं राजन्नभ्यर्च्यो भगवान् रविः
स हि माता पिता चैव कृत्स्नस्य जगतो यतः  २१
इति श्रीसाम्बपुराणे प्रथमोऽध्यायः  १

## द्वितीयोऽध्यायः

वृहद्बल उवाच
आद्यं स्थानं रवेः कुत्र कस्मिन् द्वीपे महामुने
यत्र पूजां विधानोक्तां प्रतिगृह्णात्यसौ स्वयम्  १
वशिष्ठ उवाच
चन्द्रभागातटे रम्ये पुरं यत् साम्बसंज्ञितम्
भूलोके शाश्वतं स्थानं तत्र सूर्यस्य नित्यता  २
प्रीत्या साम्बस्य तत्रार्को जगतोऽनुग्रहाय च
स्थितो द्वादशभागेन मित्रो मैत्रेण चक्षुषा  ३
तत्र भक्तिमतः सर्वाननुगृह्णाति भास्करः
विधिप्रयुक्तां पूजाञ्च गृह्णाति भगवान् स्वयम्  ४
वृहद्बल उवाच
कोऽयं साम्बः सुतः कस्य यस्य नाम्ना रवेः पुरम्
यस्य वायं सहस्रांशुर्वरदः पुण्यकर्मणः  ५
वशिष्ठ उवाच
अदितेर्द्वादशादित्यो विष्णुर्यः स पुनस्त्विह
वासुदेवत्वमापन्नस्तस्य साम्बोऽभवत् सुतः  ६
स तु पित्रा भृशं शप्तः कुष्ठरोगमवाप्तवान्
तेनायं स्थापितः सूर्यः स्वनाम्ना च पुरं कृतम्  ७
वृहद्बल उवाच
शप्तः कस्मिन् नमित्तोऽसौ पित्रा पुत्रः स्वयम्भवः
भाव्यं हि कारणेनात्र येनासौ शप्तवान् सुतम्  ८

वशिष्ठ उवाच
शृणुष्वावहितो राजंस्तस्य तच्छापकारणम्
ब्रह्मणो मानसः पुत्रो नारदो नाम यो मुनिः ९
ब्रह्मलोके मुनेस्तस्य विष्णुलोके विशेषतः
सूर्यलोके च सततं रुद्रलोके तथैव च १०
पितृराक्षसनागानां यमस्य वरुणस्य च
इन्द्रस्य चामरावत्यां पुर्यां तु धादस्य च ११
पृथिव्यां पार्थिवा ये च देवान्वयसमुद्भवाः
सदा वेश्मसु तेषां च तस्याप्रतिहता गतिः १२
वासुदेवं स वै द्रष्टुं नित्यं द्वारवतीं पुरीम्
आयाति ऋषिभिः सार्धं देवर्षिः मुनिसत्तमः १३
अथाभ्यागच्छतस्तस्य सर्वे यदुकुमारकाः
प्रद्युम्नप्रमुखा ये ते सातङ्काऽवनताः स्थिताः १४
अभिवाद्याघ्र्यर्णाद्यैस्तु पूजां कुर्वन्ति यत्नतः
साम्बस्त्ववश्यं भावित्वाद् देशशायस्य मोहितः १५
अवज्ञां कुरुते नित्यं नारदस्य महात्मनः
ततः क्रीडासु सततं रूपयौवनगर्वितः १६
अविनीतं तु तं ज्ञात्वा चिन्तयामास नारदः
अस्याह्यविनीतस्य करिष्ये विनयं भृशम् १७
पूर्वं सञ्चिन्तयित्वा तु वासुदेवं ततोऽब्रवीत्
इमाः षोडशसाहस्त्रयः पत्नयो देवस्य यास्तव १८
सर्वासान्तु मनांन्यासां साम्बेन त्वयि केशव
हृतानि पुण्डरीकाक्ष रूपयौवनशालिना १९
रूपेणाप्रतिमः साम्बो लोकेऽस्मिन् स चराचरे
अतो हीच्छन्ति तास्तस्य दर्शनं ह्यपि ताः स्त्रियः २०
वशिष्ठ उवाच

श्रुत्वैतन् नारदाद् वाक्यं भाव्येनात्र न मोहितः
सुविचार्यैव तत्सर्वं देवः प्रोवाच नारदम् २१
वासुदेव उवाच
न ह्यहं श्रद्दधाम्येतद् यदेतद् व्याहृतं त्वया
ब्रुवाणमेवं देवं हि नारदस्तु यथागतम् २२
ततः कतिपये चाह्नि द्वारकां पुनरभ्यगात्
तस्मिन्नहनि देवोऽपि सहसा पुरगामिभिः २३
अनुभूय जलक्रीडां पानमासेवितं रहः
रम्ये चैव तदोद्याने हर्म्यमालोपशोभिते २४
सर्वर्तु कुसुमैर्नित्यं वासिते चिरकानने
नृत्यद्भिः वर्हिणैर्नित्यं केकाशतनिनादिते २५
कोकिलामधुरालापैर्जलकुक्कुटनादिते
षट्पदोदीतमधुरे स्त्रक्चनन्दनचर्चिते २६
नानाजलसुपुष्पाभिर्दीर्धिकाभिरलङ्कृते
हंससारससन्तुष्टे चक्रवाकोपशोभिते २७
तस्मिन् स रमते देवः स्त्रीभिः परिवृतस्तदा
हारनूपुरकेयूरसन्नाद्यैश्च विभूषणैः २८
भूषितानां वरस्त्रीणां चार्वङ्गीनां विशेषतः
क्रीडार्थं पद्मपत्रेषु निषण्णानां यथार्हतः २९
तत्रास्मिन् दीयते तासाम् श्रेष्ठं पानं सुरासवम्
मणिकाञ्चनपात्रेषु नानापुष्पाधिवासितम् ३०
वृत्तैश्च सहकाराणां भग्नैर्नीलोत्पलैरपि
एतस्मिन्नन्तरे बुद्ध्वा मद्यमत्ता इति स्त्रियः ३१
उवाच नारदः साम्बं स्वबुद्ध्या त्वरयन्निदम्
गच्छ रैवतकं साम्ब मातिष्ठ सुकुमारक ३२
त्वां समाकृषते देवो न युक्तं स्थातुमत्र ते

तद्वाक्यार्थमबुद्ध्वैव भविनार्थेन चोदितः ३३
गत्वा तु सत्वरं साम्बः प्रणाममकरोत् पितुः
एतस्मिन्नन्तरे तत्र याः काश्चित्तुल्यसात्विकाः ३४
दृष्ट्वा ताः सहसा शाम्बं सर्वाश्चुक्षुभिरे स्त्रियः
न स दृष्टः पुरा याभिः पुष्पकेतुसमो युवा ३५
मद्यदोषात्ततः स्त्रीणां स्मृतिलोपात्तथैव च
योषितामल्पसत्वानां जघनानि विसुस्त्रुवुः ३६
श्रूयते वाप्ययं श्लोकः पुराणे पठ्यते यथा
ब्रह्मचर्येऽपि वर्तन्त्यः साध्व्यो ह्यपि तथा शृणु ३७
हृदयं तु पुरुषं दृष्ट्वा योनिः प्रक्लिद्यते स्त्रियः
लोकेऽपि श्रूयते ह्येतन् मद्यस्यात्यन्तसेवनात् ३८
लजां मुञ्चन्ति ह्रीमत्यो नार्यः सत्कुलजा अपि
सहासनैर्भोजनैः स्निग्धैः पानैः सीधु सुरासवैः ३९
गन्धैर्मनोज्ञैर्वस्त्रैश्च कामः स्त्रीषु विजृम्भते
एतद्बुध्वा कुलस्त्रीणां श्रेयः परममिच्छता ४०
मद्यं न देयमल्पं वा पुरुषेण विपश्चिता
वशिष्ठ उवाच
नारदोऽप्यथ तं साम्बं प्रेषयित्वा त्वरान्वितः
आजगाम च तत्रैव साम्बस्यानुपदेन तु ४१
आयान्तं तं मुनिं प्रेक्ष्य गुरुं देवर्षिसत्तमम्
सहसैवोत्थिताः सर्वाः स्त्रियस्ता मदविक्लवाः ४२
तासामथोत्थितानान्तु वासुदेवस्य पश्यतः
भित्वा वासांसि शुक्लानि पत्रेषु पतितं मदम् ४३
तं दृष्ट्वा तु हरिः क्रुद्धः ताः शशाप तदा स्त्रियः
यस्मात् गतानि चेतांसि मां मुक्त्वान्यत्र वः स्त्रियः ४४
तस्मात् पतिकृतांल्लोकानायुषोन्ते न यास्यथ

पतिलोकात् परिभ्रष्टाः स्वर्गे वापि गते मयि ४५
भूत्वास्त्रशरणा यूयं दस्यु हस्तं गमिष्यथ
वशिष्ठ उवाच
शापदोषात्ततस्तस्मात् स्त्रियः स्वर्गते हरौ ४५
हृताः पाञ्चनदैश्चौरैरर्जुनस्य च पश्यतः
ततस्ताः स्वल्पसत्वत्वादेवं सन्दूषिताः स्त्रियः ४६
प्राप्तवत्यो महच्छापं मुक्त्वा तिस्त्रः पतिव्रताः
रुक्मिणीं सत्यभामाञ्च तथा जाम्बवतीमपि ४७
वासुदेव उवाच
शप्त्वैवं ताः स्त्रियः कृष्णः साम्बमप्यशपत्ततः
यस्मादतीवकान्तं ते रूपं दृष्ट्वा इमाः स्त्रियः ४८
वशिष्ठ उवाच
लुब्धाः सर्वास्तु तस्मात्वं कुष्ठरोगमवाप्स्यसि
यस्मिन् सप्तः क्षणेनासौ पित्रा पुत्रः स्वयं भवः ४९
प्राप्तवान् कुष्ठरोगित्वं विरूपित्वञ्च दुस्सहम्
साम्बेन पुनरप्येवं दुर्वासाः कोपितो मुनिः ५०
भाव्येनाथ तवात्यर्थ पूर्वानुस्मरणेन वै
मतः शापाभिभूतेन साम्बेनाराध्य भास्करम् ५१
पुनः स प्राप्य तद्रूपं स्वनाम्नार्को निवेशितः
नारदो दर्शयित्वा तु स्त्रीणां भावविपर्ययम् ५२
साम्बं शापेन संयोज्य तत्रैवान्तरधीयत
प्राप्तवान्सुमच्चापं शाम्बो वै गनुजोत्तमः
तच्छापान् मुशलं जार्त कुलं यैनास्य पातितम् ५३
श्रुत्वा दुर्विनयाद् दोषानेवमादीन् विपश्चिता
नित्यं भाव्यं विनीतेन गुरुदेवद्विजातिषु ५४

इति श्रीसाम्बपुराणे साम्बशापो नाम द्वितीयोऽध्यायः २

## तृतीयोऽध्यायः

वृहद्बल उवाच
स्थापितो यदि साम्बेन सूर्यश्चन्द्रसरित्तटे
तस्मान्नाद्यमिदं स्थानं यथैतद् भाषितं त्वया १
वशिष्ठ उवाच
आद्यं स्थानमिदं भानोः पश्चात् साम्बेन निर्मितम्
विस्तरेणास्य चाद्यत्वं कथ्यमानं निबोध मे २
अनाद्यो लोकनाथो यं रश्मिमाली जगत्पतिः
मित्रत्वे च स्थितो देवस्त पस्तेपे नराधिपः ३
अनादिनिधनो ब्रह्मा नित्यश्चाक्षय एव च
सृष्ट्वा प्रजापतीन् सर्वान् सृष्ट्वा च विविधाः प्रजाः ४
ततः स च सहस्त्रांसुरव्यक्तः पुरुषः स्वयम्
कृत्वा द्वादशधात्मानमादित्यामुत्याद्यत् ५
इन्द्रोधाताथपर्जन्यः पूषात्वष्टार्यमाभगः
विवस्वात् विष्णुरंशुश्च तरुणोमित्र एव च ६
अभिर्द्वादशभिस्तेन सूर्येण परमात्मना
सर्वं जगदिदं व्याप्तं मूर्तिभिस्तु नराधिप ७
तस्य या प्रथमा मूर्तिर्नाम्ना धातेति कीर्तिता
स्थिता सा देवराजत्वे देवानामनुशासने ८
द्वितीयार्कस्य मूर्तिर्था नाम्ना धातेति कीर्तिता
स्थिता प्रजापतित्वे सा विविधाः सृजते प्रजाः ९
तृतीयार्कस्य या मूर्तिः पर्जन्य इति विश्रुता
मेधेष्ववस्थिता सा तु वर्षते च गभस्तिभिः १०
चतुर्थो तस्य या मूर्तिर्नाम्ना पूषेति विश्रुता
अन्नेष्वस्थिता सा तु प्रजां पुष्णाति नित्यशः ११
पञ्चमी चास्य या मूर्तिर्नाम्नात्वष्टेति कीर्तिता

स्थिता वनस्पातौ सा तु उषधीषु च सर्वशः १२
मूर्तिः षष्ठी रवेर्या तु अर्यमा इति विश्रुता
वायोः सञ्चरणार्था सा देहेष्येव समस्थिता १३
भानुर्या सप्तमी भूमिर्नाम्ना भग इति श्रुता
भूमा व्यवस्थिता सा तु शरीरेषु च देहिनाम् १४
मूर्तिर्या चाष्टमी चैव विवस्वानिति विश्रुता
अग्नौ व्यवस्थिता सा तु पचत्यन्नं शरीरिणाम् १५
नवमी चित्रभानोर्या मूर्तिर्विष्णुश्च नामतः
प्रादुर्भवति सा नित्यं देवानामरिसूदनी १६
दशमी तस्य या मूर्तिरंशुमानिति विश्रुता
वायौ व्यवस्थता सा तु प्रहलादयति वै प्रजाः १७
मूर्तिस्त्वेकादशी या तु भानोर्वरुणसंज्ञिता
सा जीवयति वै कृत्स्नं जगदप्सु प्रतिष्ठिता १८
अपां स्थानं समुद्रस्य तरुणोऽप्सु प्रतिष्ठितः
तस्माद् वै प्रोच्यते नाम्ना सागरो वरुणालयः १९
मूर्तिर्या द्वादशी भानौर्नामता मित्रसंज्ञिता
लोकानां सा हितार्थाय स्थिता चन्द्रसरित्तटे २०
वायुभक्षस्तपस्तेपे स्थिता मैत्रेण चक्षुषा
अनुगृह्णन् सदा भक्तान् वरैर्नानाविधैस्तु स २१
एवमांद्यमिदं स्थानं पश्चात् साम्बे निर्मितम्
तत्र मित्रे स्थितो यस्मात्तस्मान्मित्रवनं स्मृतम् २२
एवं द्वादशभिस्तेन सवित्रा परमात्मना
कृत्स्नं जगदिदं व्याप्तं मूर्तिभिस्तु नराधिप २३
तस्माद् वन्द्यो नमस्यश्च द्वादशंसांसु मूर्तिषु
भक्तिमद्भिर्नरैर्नित्यं तद्गतेनान्तरात्मना २४
इत्येतद् द्वादशादित्यं जगद् ज्ञात्वा तु मानवः

नित्यं श्रुत्वा पठित्वा च सूर्यं लोके महीयते २५
इति श्रीसाम्बपुराणे द्वादशमूर्त्युपाख्यानं नाम तृतीयोऽध्यायः ॥

## चतुर्थोऽध्यायः

वृहद्बल उवाच
यदि तावदसौ सूर्यश्चादिदेवः सनातनः
तत् किमर्थ तपस्तेपे वरेप्सुः प्राकृतो यथा १
वशिष्ठ उवाच
एतत्तेऽहं प्रवक्ष्यामि परं गुह्यं विभावसोः
पुरा मित्रेण यत् प्रोक्तं नारदाय महात्मने २
प्राङ्मयोक्ताश्च यास्तुभ्यं रवेर्द्वादश मूर्तयः
मित्रश्च वरुणश्चोभौ तासान्तु तपति स्थितौ ३
अव्यक्षो वहणस्ताभ्यां तस्थे पश्चिमसागरे
मित्रो मित्रवने चास्मिन् वायुभक्षो चरत्तपः ४
अथ मेरोर्गिरिश्शृङ्गात् प्रच्युतो गन्धमादनात्
नारदः स समहद्भूतः सर्वलोकानचीवरत् ५
आजगामाथ तत्रैव यत्र मित्रो चरंतपः
तं दृष्ट्वा तु तपस्यन्तं परं कौतूहलं ह्यभूत् ६
योऽक्षयश्चाव्यश्चैव व्यक्ताव्यक्तः सनातनः
धृतं चैकात्मनो येन त्रैलोक्यमिदमात्मना ७
यः पिता सर्वदेवानां दैवतं चापि यः परम्
यजते देवताः कास्तु पितृन् वा कानयं यजेत् ८
नारद उवाच
इति सञ्चिन्त्य मनसा तं देवं नारदोऽब्रवीत्
देदेषु च पुराणेषु साङ्गोपाङ्गेषु गीयसे ९
त्वमजः शाश्वतो जातो महामृतमनृत्तमम्

भूतं भव्यं भविष्यं च त्वयि सर्वं प्रतिष्ठितम्  १०
चत्वारो ह्यश्रमा देवः गृहस्थाद्यास्तथैव हि
यजन्ते त्वामहरहर्नानामूर्तिसमाश्रिताः  ११
पिता माता च सर्वस्य दैवतं त्वं हि शाश्वतम्
यजसे पितरं कं त्वं देवं वापि न वेदम्यहम्  १२
मित्र उवाच
अवाच्यमेतद् वक्तव्यं परं गह्यं सनातनम्
त्वयि भक्तिमति ब्रह्मन् प्रवक्ष्यामि यथातभम्  १३
यत्तसूक्ष्ममविज्ञेयमव्यक्तमचलं ध्रुवम्
इन्द्रियैरिन्द्रियार्थैश्च सर्वभूतैश्च वर्जितम्  १४
सह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चैव कथ्यते
त्रिगुणव्यतिरिक्तोऽसौ पुरुपश्चेति कल्पितः
हिरण्यगर्भो भगवान् स वै बुद्धिरिति स्मृतः  १५
महानिति च योगेषु प्रधानञ्चेति कथ्यते
सांख्ये च पठ्यते शास्त्रे स एको बहुधात्मकः  १६
विचित्ररूपो विश्वात्मा एकान्तर इति स्मृतः
धृतं नैकात्मकं येन त्रैलोक्यमिदसात्मना  १७
अशरीरः शरीरेषु सर्वेषु निवसत्यसौ
वसन्नपि शरीरेषु न स लिप्यति कर्मभिः  १८
ममान्तरात्मा तव च ये चान्ये देहिंसंज्ञिताः
सर्वेषां साक्षिभूतोऽसावग्राह्यः केनचित् क्वचित्  १९
सगुणो निर्गुणश्चेशो ज्ञानगम्य इति स्मृतः
सर्वतः पाणिपादोऽसौ सर्वतोऽक्षि शिरोमुखः  २०
सर्वतः श्रुतिमांल्लोके सर्वमावृत्य तिष्ठति
सर्वेन्द्रियगुणावासं व्याप्य सर्वेन्द्रियो ह्यसौ  २१
यथा दीपसहस्राणि दीप एकः प्रसूयते

तथा रूपसहस्राणि स च एकः प्रसूयते २२
बुध्यते च सदात्मानं सदा भवति केवलः
एकत्वं प्रलये चास्य बहुत्वं च प्रवर्तनात् २३
नित्यं हिनस्ति जगति भूतं स्थावरजङ्गमम्
अक्षयश्चाप्रमेयश्च सर्वगः स च उच्यते २४
तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम
अव्यक्ता व्यक्तभावस्था या सा प्रकृतिरुच्यते २५
तां योनिं ब्रह्मणो विद्धि योऽसौ सदसदात्मकः
लोके च पूज्यते योऽसौ दैवे पैत्र्ये च कर्मणि २६
नास्ति तस्मात् परो ह्यन्यः पिता देवो पिवा द्विज
आत्मा हि नः स विज्ञेयस्ततस्तं पूजयाम्यहम् २७
स्वर्गस्थाश्चापि ये केचित्तं नमस्यन्ति देवताः
ते तत्प्रसादात् गच्छन्ति तेनोद्दिष्टफलां गतिम् २८
तं देवाश्चाश्रमस्थाश्च नानामूर्तिसमाश्रिताः
भक्ताः सम्पूजयन्त्याद्यं गतिं तेभ्यो ददाति सः २९
स हि सर्वगतश्चैव निर्गुणश्चैव कथ्यते
एवं ज्ञात्वा तमात्मानं पूजयामि सनातनम् ३०
ये तु तद्भाविता लोका एकत्वञ्च समाश्रिताः
तमेव चैव ते सर्वे विशन्त्यक्षयमक्षयम् ३१
एतदप्यधिकं तेषां यदेतत् प्रविशन्त्युत
इति गुह्यः समुद्देशस्तव नारद कीर्तितः ३२
अस्मद्भवत्यपि देवर्षे त्वयापि परमं श्रुतम्
सुरैर्वा मुनिभिर्वापि पुराणं यैरिदं श्रुतम् ३३
ते सर्वे परमात्मानं पूजयन्ति दिवाकरम्
इदमाख्यानमामासेव्यं यन्मया परिकीर्तितम् ३४
नह्यनादित्यो भवत्यायं त्वया देवं कदाचन

यश्चैतच्छ्रावयेन्नित्यं यश्चैव शृणुयान्नरः ३५
स सहस्रत्विषं देवं प्राविशेन्नात्र संशयः
मुच्येतार्तस्तथा रोगान्मुने श्रुत्वा कथामिमाम् ३६
जिज्ञासुर्लभते ज्ञानं गतिमिष्टां तथैव च
क्षेमेण व्रजते ध्वानमिदं यः पठतेऽध्वनि ३७
यं यं कामयते कामं तं तं प्राप्नोत्यसंशयम्
वशिष्ठ उवाच
एवमेतन्मयाख्यातं नारदेन महात्मना ३८
मयापि च तवाख्यातं श्रीमद् भानोरिदं नृप
त्वया तत् सततं राजन् अभ्यर्च्यो भगवान् रविः ३९
स हि धाता विधाता च सर्वस्य जगतो गुरुः
इति श्रीसाम्बपुराणे चतुर्थोऽध्यायः ४०

## पञ्चमोऽध्यायः

वृहद्बल उवाच
कथं साम्बः प्रपन्नोऽर्कं केन वा प्रतिपादितः
उग्रं शापं च सम्प्राप्य पितरं स किमुक्तवान् १
वशिष्ठ उवाच
ततः शापाभिभूतो सौऽसाम्बः पितरमब्रवीत्
किं मयापकृतं देव येन शप्तो ह्यहं त्वया २
अहं त्वदाज्ञया देव त्वरमाण इहागतः
कथं निपातितः शापो मयि तेऽनपकारिणी ३
न तेऽपकुर्वेवै किंचित् प्रसीद जगतः पते
शापं नियच्छ देवेश प्रसादं कुरु मे प्रभो ४
तमुवाच ततः कृष्णः साम्बं बुद्ध्वा ह्यनागसम्
तस्मात्तमेव पृच्छस्व प्रसाद्य मुनिपुंगवम् ५

अख्यास्यति स ते देवः शापं यस्तेऽपनेष्यति
अथैतत्सवितुर्वासम् श्रुत्वा जाम्बवती सुतः ६
क्षीणं शापपरीताङ्गः ततः सञ्चिन्त्य वै पुनः
द्वारवत्यां स्थितं विष्णुं कदाचिद् द्रष्टुमागतम् ७
विनयादुपसंगम्य साम्बः पप्रच्छ नारदम्
शाम्ब उवाच
भगवन् ब्रह्मणःपुत्र सर्वज्ञ सर्वलोकग ८
दयां कुरु त्वं विप्रेन्द्र प्रणतस्य ममानघ
त्वत्तोऽहं श्रोतुमिच्छामि निश्चयं ब्रूहि तन्मम ९
कः स्तुत्यः सर्वदेवानां कः परः पुरुषोऽव्ययः
सर्वस्यार्तिहरः कश्च शरणं कं प्रजाम्यहम् १०
पितृशापसमुत्थेन कस्मलेन महामुने
अभिपन्नस्य मोक्षो हि कं प्रपन्नस्य मे भवेत् ११
वशिष्ठ उवाच
एवं हि पृच्छते तस्मै साम्बायोवाच नारदः
नारद उवाच
कदाचित् पर्यटन् लोकान् सूर्यलोकमहं गतः १२
तत्र दृष्टो मया सूर्यः सर्वैर्देवगणैर्वृतः
गन्धर्वैरप्सरोभिरचनागैर्यक्षैश्च राक्षसैः १३
गायन्ति तत्र गन्धर्वाः नृत्यन्तेऽपसरसस्तथा
रक्षन्त्युदात्तशास्त्रास्तं यक्षराक्षसपन्नगाः १४
ऋचो यजूंषि सामानि मूर्तिवन्ति ह तत्र च
तत्कृतैः विविधैः स्तोत्रैः स्तुवन्ति ऋषयो रविम् १५
मूर्तिवत्यः शुभास्तत्र तिस्रः सन्ध्याः शुभाननाः
गृहीत्वा वज्रनाराचान् परिवार्य रविं स्थिताः १६
आदित्या वसवो रुद्रा मरुतश्चाश्विनौ तथा

त्रिसन्ध्यं पूजयन्त्यर्कं तत्रान्ये च दिवौकसः १७
ईरयन्ति जयशब्दन्तु शक्रस्तत्रैव तिष्ठति
ब्रह्मा विष्णुश्च रुद्रश्च प्रयुञ्जन्त्याशिषः शुभाः १८
रथं वाहयते तस्य अरुणो नाम सारथिः
हरितैः सप्तभिर्युक्तं छन्दोभिर्वाजिरूपिभिः १९
द्वे भार्ये पार्श्वयोर्स्तस्य ते राज्ञयौ निक्षुभे शुभे
अन्यैश्च नामभिर्देवाः परिवार्य रविं स्थिताः २०
पिङ्गलो देवकस्तत्र ततोऽन्यो दण्डनायकः
राज्ञः स्तोषौ च तद्द्वारे ततः कल्माषपक्षिणौ २१
ततो व्योम चतुः श्रङ्गं मेरोः सदृशलक्षणम्
दिण्डिर्नग्नाऽग्रतस्तस्य आन्ये तत्रस्थिताः सुराः २२
एवं सवगतं नित्यं प्रदीपं जगतः शुभम्
ब्रह्माद्यैः संस्तुतं देवैरादित्यं शरणं व्रज २३
इति श्री साम्बपुराणे तत्स्वरूपाख्याने पञ्चमोऽध्यायः ५

## षष्ठोऽध्यायः

शाम्ब उवाच
तत्वतः श्रोतुमिच्छामि कथं सर्वगतो रविः
कतिधा तपसस्तस्य मूर्तयश्च कति स्मृताः १
का राज्ञी निक्षुभा का च कश्चायं दाण्डनायकः
पिङ्गलश्चापि कः प्रोक्तः किञ्चासौ लिखते सदा २
राज्ञः श्रौषौ च द्वारे कौ कौ च कल्माषपक्षिणौ
किं दैवतञ्च तद् व्योम मेरोः सदृशलक्षणम् ३
को दिण्डिनग्नको यश्च के देवा दिक्षु ये स्थिताः
तत्वतो निगमञ्चैव विस्तरेण वदस्व मे ४
नारद उवाच

विस्तरेणानुपूर्व्या च सूर्यं निगदतः शृणु
ततः शेषं प्रवक्ष्यामि नमस्कृत्य विवस्वते ५
अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकम्
प्रधानं प्रकृतिश्चेति तमाहुस्तत्त्वचिन्तकाः ६
गन्धवर्णरसैर्हीनं सदसद्रसवर्जितम्
जगद्योनिं समुद्भूतं परं ब्रह्म सनातनम् ७
निग्रहः सर्वभूतानामव्यक्तमभवत् पुरा
अनाद्यनन्तमजं सूक्ष्मं निर्गुणप्रभवाव्ययम् ८
अन्यप्रस्तमविज्ञेयं तमाहुः परमं पदम्
तेनात्मना सर्वमिदं जगद् व्याप्तं महात्मना ९
तस्येश्वरस्य प्रणतिर्ज्ञानवैराग्यलक्षणा
धर्मैश्वर्यकृता बुद्धिर्नास्ति तस्याभिमानिता १०
अव्यक्ताज्जायते तस्मात् मनसा यस्तदीक्षते
चतुर्मुखश्च ब्रह्मत्वे कालत्वे चान्तकृद् भवः ११
सहस्रमूर्धा पुरुषः तिस्रोऽवस्थाः स्वयम्भुवः
सत्वं रजश्च ब्रह्मत्वे कालत्वे च रजस्तमः १२
सात्विकं पुरुषत्वे च गुणवृत्तं स्वयम्भुवः
ब्रह्मत्वे सृजते लोकान् कालत्वे संक्षिपत्यपि १३
पुरुषत्वेऽप्युदासीनाः तिस्रोऽवस्थाः स्वयम्भुवः
त्रिधा विभावतात्मानं त्रैलोक्यं सम्प्रवर्त्यते १४
सृज्यते ग्रस्यते चापि वीक्ष्यते च त्रिभिः स्वयम्
अग्रे हिरण्यगर्भस्तु प्रादुर्भूतः स्वयम्भुवः १५
आदित्यस्त्वादिदेवत्वादजातत्वादजः स्मृतः
देवेषु च मदादेवो महादेवस्ततः स्मृतः १६
सर्वेशत्वाच्च लोकस्य अवश्यत्वाच्च ईश्वरः
वृंहित्वाच्च स्मृतो ब्रह्मा भूतत्वाद् भव उच्यते १७

पातिः यस्मात् प्रजाः सर्वाः प्रजापतिरिति स्मृतः
पूर्यां शेते च यस्माच्च तस्मात् पुरुष उच्यते १८
न प्रोत्पादक पूर्वत्वात् स्वयम्भूरिति विश्रुतः
हिरण्येन तु गर्भस्थो यस्मादेव समावृतः १९
तस्माद्धिरण्यगर्भेति सूर्यो देवो निगद्यते
आपो नारा इति प्रोक्ता ऋषिभिस्तत्त्वर्शिभिः २०
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः
अरमित्येष सिद्धार्थे निपातः कविभिः स्मृतः २१
एकार्णवे पुरा तस्मिन्नष्टे स्थावरजङ्गमे
नारायणाख्यः पुरुषः सुष्वाप सलिले तदा २२
सहस्रशीर्षा तु महान् सहस्रचक्षुः सहस्रपात्
सहस्रवाहुः प्रथमः प्रजापतिरुच्यते रविः २२
आदित्यवर्णो भुवनस्य गाप्ता पूर्वमे एकः प्रथमः सुराणाम्
हिरण्यगर्भः पुरुषो महात्मा स पठ्यते वै पुरुषः परस्तात् २३
तुल्यं युगसहस्रस्य नैशं कालमुपास्यतः
प्रकुरुते प्रह्वत्वं च सर्वकारणकारणात् २४
सलिलेनाप्लुतां भूमिं दृष्ट्वा कार्यं विचिन्त्य सः
भूत्वा वै स तु वाराहः अपः स विशते प्रभुः २५
सञ्चिन्त्यैवं च देवो सौऽभूमेरुद्धरणं क्षमः
महीं महार्णवे मग्नामुद्धर्तुमुपचक्रमे २६
उत्तिष्ठतस्तस्य जलार्ककुक्षे महावराहस्य महीं विधाय
विधुन्वतो वेदमयं शरीरं लोकान्तरस्था मुनयो जयन्ति २७
उद्धृत्य चोर्वी सलिलात् प्रजासर्गमकल्पयत्
सोऽसृजन्मानसान् पुत्रानात्मनस्तेजसा समान् २८
भृग्वंगिरसमत्रिं च पुलस्त्यं पुलहं क्रतुम्
मरीचिमथ दक्षं च वशिष्ठं नवमं तथा २९

नव प्रजापतीन् सृष्ट्वा ततः स पुरुषोत्तमः
प्रादुर्भूतोऽदितेः पुत्रः प्रजानां हितकाम्यया ३०
मरीचिः कश्यपं पुत्रं वाचैवाजनयज्जले
प्रजापतीमं दशमं तेजसा ब्रह्मणः समम् ३१
दक्षकन्या दितिर्नाम्ना पत्नी सा कश्यपस्य तु
अण्डं सा जनयामास भूनभस्तलविस्तरम् ३२
तत्रोत्पन्नः सहस्रांशुर्द्वादशात्मा दिवाकरः
नव योजनसाहस्रो विस्तारस्तस्य वै स्मृतः ३३
विस्तारत्रिगुणश्चास्य परिणाहस्तु मण्डले
यथा पुष्पं कदम्बस्य समन्तात् कशरैर्वृतम् ३४
तथैव तेजसो गोलं समन्ताद् रश्मिभिर्वृतम्
सहस्रशीर्षापुरुषः प्राज्ञया य उदाहृतः ३५
तेजसस्तस्य गोलस्य स मध्ये सुव्यवस्थितः
आदित्यः स तपत्येष पिबन्नपो गभस्तिभिः ३६
सहस्रपादस्त्वेषोऽग्निर्वृत्तशङ्कुरिव स्मृतः
आदत्ते स तु रश्मीनां सहस्रेण समन्ततः ३७
आपो नदीसमुद्रेभ्यो ह्रदकूपेभ्य एव च
प्रभा सौरा तु पादेन अस्तं याति दिवाकरे ३८
अग्निमाविशते रात्रौ तस्माद् दूरात् प्रकाशते
उदिते च पुनः सूर्यो अस्तमाग्नेयमाविशेत् ३९
यदि न तेजसश्चाग्नेस्तथा न ग्रसते दिवा
प्रकाशं च तमोघ्नं च सौर्य्याग्नेये च तेजसि ४०
परस्परानुप्रवेशादाप्यायेते दिवानिशम्
नारद उवाच
व्यापकत्वं च रश्मीनां नामानं च निबोध मे ४१
हेतवः किरणा गावो रश्मयश्च गभस्तयः

अभीषवो वनम् उस्रा वसवो थे मरीचयः ४२
नाड्यो दिधीतयः साध्या मरुषा भानवो शवः
सप्तर्षयः सुपर्णाश्च कराः पादास्तथैव च ४३
एवं नाम्नां तु पर्याया रश्मीनां विंशतिःस्मृताः
वन्दनादिति वक्ष्यामि नामान्येषां पृथक् पृथक् ४४
रवेः करसहस्रन्तु शीतवर्षोष्ण निस्तुवम्
तासां चतुःशता नाड्यो वर्षन् न्योऽचिन्त्यमूर्तयः ४५
वन्दनाश्चैव मेध्याश्च कातनाः केतनास्तथा
अमृता नामतः सर्वाः रश्मयो वृष्टिसर्जनाः ४६
हिमोद्वहास्तु ताभ्योऽन्याः रश्मयस्त्रिंशतिःस्मृताः
चन्द्रास्ता नामतः सर्वाः पीतामास्तु गभस्तयः ४७
रश्ययो मेधपोषाश्च हादिन्यो हिमसर्जनाः
शुक्लाश्च कुसुमाश्चैव गान्धो विचननास्तथा ४८
शुक्लाश्च नामतः सर्वास्त्रिंशतो धर्मसर्जनः
समं विभ्रति ताः सर्वान् मनुष्यान् देवताःपितॄन् ४९
मनुष्यानोषधीभिस्तु स्वधया तु पितॄनपि
अमृतेन सुरान् सर्वान् त्रींस्त्रिभिरतर्पयन् ५०
वसन्ते चैव ग्रीमे च शतैः स तपते त्रिभिः
शरत्सु चैव वर्षासु चतुर्भिः सम्प्रवर्षति ५१
हेमन्ते शिशिरे चैव हिमोत्सर्गं त्रिभिः पुनः
ओषधीषु वलं धत्ते स्वधायां तु स्वधां पुनः ५२
सूर्यो रश्मिभिरमृते त्रयं त्रिषु नियच्छति
कालोऽग्निर्वत्सरश्चैव द्वादशात्मा प्रजापतिः ५३
तपत्येष सुरश्रेष्ठस्त्रीन् लोकान् सचराचरान्
एष ब्रह्मा च विष्णुश्च एष एव महेश्वरः ५४
ऋचो यजूंषि सामानि एष एव न संशयः

उद्यन् स दीप्यते ऋृग्भिर्मध्याह्ने यजुभिस्तथा ५५
सामभिश्चापि सायाह्ने दीप्यते भास्करः क्रमात्
स एष तेजसां राशिर्दीप्तिमान् सार्वलौकिकः ५६
पार्श्वे चोर्ध्वमधश्चैव प्रतपत्येष सर्वतः
यथा प्रभाकरो दीपो गृहमध्ये व्यवस्थितः ५७
पार्श्वे चोर्ध्वमधश्चैव तमो नाशयते समम्
तद्वत् सहस्रकरणो ग्रहराजो जगत्पतिः ५८
त्रीणि रश्मिशतान्यस्मिन् भूलोकं द्योतयन्त्यधः
चत्वारि तु पुनस्तिर्यक् त्रीणि चोर्ध्वं सुरालयम् ५९
इत्येतन्मण्डलं शुक्लं भास्करं लोकसंज्ञितम्
नक्षत्रग्रहसामानां प्रतिष्ठा योनिरेव च ६०
चन्द्रः सर्क्षग्रहाः सर्वे विज्ञेयाः सूर्यसम्भवाः
रवेः करसहस्रं यत् प्राज्ञया समुदाहृतम् ६१
तेषां श्रेष्ठाः पुनः सप्त रश्मयो ग्रहयोनयः
सुषुम्नो हरिकेशश्च विश्वकर्मा तथैव च ६२
विश्वव्यचा पुनश्चान्यः सम्यग्वसुव्रतः स्मृतः
उदावसुः पुनश्चान्यः स्वरान्यः संप्रकीर्तितः ६३
सुषुम्नः सूर्यरश्मिर्यः क्षीणं शशिनमेधते
अमृतं त्वर्धमासेन सम्भृत्यैकेन रश्मिना ६४
आप्यायनाय देवानामादित्यश्चन्द्रतां गतः
शुक्लत्वामृतशीतत्वे दीप्तौ वाह्लादनेऽपि च ६५
घातुश्च दीप्तिवृद्धार्थस्तेनासौ चन्द्र उच्यते
सम्यक्वसुस्तुयो रश्मिर्योनिः सोऽङ्गारकस्य तु ६६
दक्षिणे विश्वकर्मा तु रश्मिणाप्यायते बुधम्
उदावद्धन्तु यो रश्मिर्योतिः स तु वृहस्पतेः ६७
विश्वव्यचाश्च यो रश्मिः शुक्रयोनिः स वै स्मृतः

शनैश्चरे पुनश्चापि रश्मिनाप्यायते स्वराट् ६८
हरिकेशश्च यो रश्मिर्ज्ञेयो नक्षत्रयोनिगः
न क्षीयन्ते ततस्तानि तेषां नक्षत्रता ततः ६७
क्षत्रं वीर्यं वलं तेज इति चैकार्थवाचकम्
सूर्यक्षत्रं तथादत्ते तेषां नक्षत्रता स्मृता ७०
अस्माद् लोकादमुं लोकं तीर्णानां सुकृतैर्गृहान्
तारणं कारका ह्येषा शुक्लत्वाच्चैव तारकाः ७१
सूर्यस्यैवापरो रश्मिर्नाम्ना वृष्टिपतिः स्मृतः
समत्वं प्रतिबद्धस्तु स जीवयति वै प्रजाः ७२

इति श्रीसाम्बपुराणे रश्मिवर्णनो नाम षष्ठोऽध्यायः

## सप्तमोऽध्यायः

नारद उवाच
आदित्यमूलमखिलं त्रैलोक्यं यदुनन्दन
भवत्यस्माज्जगत्सर्वं सदेवासुरमानुषम् १
रुद्रोपेन्द्रमहेन्द्राणां विप्रेन्द्रत्रिदिवौकसाम्
महाद्युतिरतीवोग्र तेजोऽयं सार्वलौकिकः २
सर्वात्मा सर्वलोकेशो देवदेवः प्रजापतिः
सूर्य एव त्रिलोकस्य मूलं परमदैवतम् ३
अग्नौ क्षिप्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ४
सूर्यात् प्रसूयते सर्वं तत्र चैव प्रलीयते
भावाभावौ हि लोकानामादित्यान्निःसृतौ पुरा ५
सततं ध्यायिनो ध्यानं मोक्षश्चाप्येष मोक्षिणाम्
अत्र गच्छन्ति निर्वाणं जायन्तेऽस्मात् पुनः प्रजाः ६
क्षणा मूहूर्ता दिवसा निशाः पक्षास्तथैव च

मासाः सम्वत्सराश्चैव ऋतवोऽथ युगानि च ७
तदादित्यादृते ह्येषां कालसंख्या न विद्यते
कालादृते न नियमो नाग्नेर्विहरणक्रिया ८
ऋतूनामभिभागश्च पुष्पं मूलं फलं कुतः
कुतश्च सस्यनिष्पत्तिः तृणौषधिगणाः कुतः ९
अभावो व्यवहाराणां जन्तूनां दिवि चेह च
जगत्प्रतापनमृते भास्करं वारितस्करम् १०
नावृष्ट्या तपते सूर्यो नावृष्ट्या परितुष्यति
नावृष्ट्या परिधिं धत्ते वारिणा दीप्यते रविः ११
वसन्ते कपिशः सूर्यो ग्रीष्मे काञ्चनसन्निमः
श्वेतो वर्षासु वर्णेन पाण्डुः शरदि भास्करः १२
हेमन्ते ताम्रवर्णस्तु शिशिरे लोहितो रविः
इति वर्णाः समाख्याताः सूर्यस्य ऋतुसम्भवाः १३
ऋतुस्वभावजैर्वर्णैः सूर्यः क्षेमे सुभिक्षकृत्

इति श्रीसाम्बपुराणे सर्वव्यापित्ववर्णनो नाम सप्तमोऽध्यायः

## अष्टमोऽध्यायः

नारद उवाच
अथादित्यस्य नामानि सामान्यानीह द्वादश
द्वादशश्च पृथकत्वेन तानि वक्ष्याम्यशेषतः १
आदित्यः सविता सूर्यो मिहरोऽर्कः प्रभाकरः
मार्तण्डो भास्करो भानुश्चित्रभानुर्दिवाकरः २
रविर्द्वादशधा चैव ज्ञेयः सामान्यनामभिः
विष्णुर्धाता भगः पूषा मित्रेन्द्रो वरुणोऽर्यमा ३
विवस्वानंशुस्त्वष्टा च पर्यन्यो द्वादश स्मृताः
इत्येतद्द्वादशादित्याः पृथक्त्वेनः प्रकीर्तिताः ४

उत्तिष्ठन्ति सदा ह्येते मासैर्द्वादशभिः क्रमात्
विष्णुस्तपति चैत्रे तु वैशाखे चार्यमा तथा ५
विवस्वान् ज्येष्ठमासे तु आषाढे चांशुमान् स्मृतः
पर्यन्यः श्रावणे मासि वरुणः प्रोष्ठसंज्ञके
इन्द्रोऽश्वयुङ्मासे तु धाता तपति कार्तिके ६
मार्गशीर्षे तथा मित्रः पूषा पौषे दिवाकरः
माघे भगस्तु विज्ञयस्त्वष्टा तपति फाल्गुने ७
एतैर्द्वादभिर्विष्णुरश्मिभिर्दीप्यते सदा
दीप्यते गोसहस्रेण शतैश्च त्रिभिरर्यमा ८
द्विसप्तकैर्विवस्वांस्तु अंशुमान् पञ्चकैस्त्रिभिः
विववस्वानिव पर्यन्यो वरुणश्चार्यमा तथा ९
इन्द्रस्तु द्विगुणैः षड्भिर्धातैकादशभिः शतैः
मित्रस्तु दशभिः सार्द्धं पूषा तु दशभिः शतैः १०
मित्रवच्च भगस्त्वष्टा सहस्रेण शतेन च
उत्तरोपक्रमेऽर्कस्य वर्धन्ते रश्मयस्तथा ११
दक्षिणोपक्रमे तस्य ह्रसन्ते सूर्यरश्मयः
एवं रश्मिसहस्रं तत् सूर्यलोकार्थसाधकम् १२
भिद्यते ऋतुमासाद्यैः सहस्रं बहुधा पुनः
एवं नाम्नां चतुर्विंशतिस्त्रैषा तु प्रकीर्तिता १३
विस्तरेण सहस्रन्तु पुनरन्यत् प्रकीर्तितम्
अत्र चैषां पुनर्नाम्नां धात्वर्थनिगमं शृणु १४
दिव्यानां पार्थिवानाञ्च वंशानामिह सर्वशः
आदनान्नित्यमादित्यस्तपसां तेजसामयम् १५
अदितेर्वा सुतो यस्मान्नियमज्ञैरुदाहृतः
अपत्यप्रत्ययात्तस्मात् सूर्यस्यादित्यता स्मृता १६
स्रवन्ति स्यन्दनार्थे च धातुरेष निपात्यते

स्रवणात्तेजसोऽद्धा च तेनासौ सविता स्मृतः  १७
शश्वच्च जायते यस्माच्छश्वत् संतिष्ठते यतः
तस्मात् सर्वैः स्मृतः सूर्यो निगमज्ञै मनीषिभिः  १८
नुदिरप्रेरणे धातुर्भा दीप्तौ च प्रकीर्तितः
नोदनात् कारणाभासां भानुरित्यभिधीयते  १९
चित्रा हि भानवो यस्य वर्णैश्शुक्लादिभिर्यतः
भानवो रश्मयः प्रोक्ताश्चित्रभानुस्ततः स्मृतः  २०
भास्वरास्तु करा ह्यस्य भासोऽत्यर्थं करोति च
भास्संदीप्तौ स्मृतो धातुर्भास्करस्तेन स स्मृतः  २१
भा दीप्तावित्ययं धातुः प्रोपसर्गेण योजितः
भाः करोति प्रमारेण यस्मात् तस्मात् प्रभाकरः  २२
दिवेति चाव्ययं लिंगं पठ्यते सूरिभिः सदा
दिवा करोति यस्माच्च तस्मादेष दिवाकरः  २३
अवति त्रीनिमांल्लोकान् यस्मादेष परिभ्रमन्
अवेति रक्षणे धातुरवनात् स रविः स्मृतः  २४
यस्मात् सिञ्चति लोकांस्त्रीन् रविर्दिव्येन वारिणा
मिहेति सेचने धातुर्मेहनात् मिहिरः स्मृतः  २५
धातुरर्चेति पूजायामस्य कः प्रत्ययः स्मृतः
धातुरर्चेति पूजायामस्य कः प्रत्ययः स्मृतः
देवैरभ्यर्चितो यस्मात् तस्मादर्कः स उच्यते  २६
अण्डे द्विधाकृते ह्यार्तं दृष्टवा स्नेहात् पिताऽब्रवीत्
यस्माद् धारयते लोकान् भूतिमेषां ददाति च  २७
डुधाञ्धारणे धातुः तस्मात् धाता स उच्यते  २८
मनि प्रत्ययपूर्वस्य ऋधातो र्यन्निपात्यते
गतौ यस्मात्तमो नास्ति तेन सूर्योऽर्यमा स्मृतः  २९
स्नेहेन सर्वभूतानि यस्मादूर्जति भास्करः

त्रिभिदा स्नेहनेधातु स्तस्मान्मित्रः स उच्यते ३०
वरान् विवृणुते देवे वरदश्च वरार्थिनाम्
धातुर्वृंङ् वरणे प्रोक्तस्तेनासौ वरुणः स्मृतः ३१
ऐश्वर्यं परमं यस्य वशगाश्च सुराशुराः
इदिश्चपरमैश्वर्ये धातुरिन्द्रस्ततः स्मृतः ३२
शक्तो यं जगतः कर्तुं सर्गानुग्रह-संग्रहान्
शक्लृशक्तौ स्मृतो धातुः शक्रस्तेन स उच्यते ३३
वसत्यदृष्टः सरवेषु भूतेष्वन्तर्हितो रविः
धातुर्वंस निवातेति विवस्वांस्तेन उच्यते ३४
गर्जं शब्दे प्रपूर्वस्य धातोः पर्यं निपात्यते
गर्जत्यतीव यस्माच्च तस्मात् पर्यन्य उच्यते ३५
यस्मात् सिञ्चति लोकांस्त्रीन्भूर्भुवः स्वोऽमृतादिभिः
पुष पुष्टौ स्मृतो धातुस्तस्मात् पूषा स उच्यते ३६
अ्रशु व्याप्तावयं धातुः प्रत्ययश्च नुगागमः
सर्वं व्याप्त जगत् यस्मात् तस्मादंशुः स उच्यते ३७
सेव्यते च सुरैः सर्वैः भाश्चैव भजते यतः
धातुर्भजेति सेवायां तेनासौ भग उच्यते ३८
तुष तुष्टौ स्मृतो धाधुः तस्मात् त्वष्टा निपात्यते
सृजत्येष प्रजास्तुष्टस्त्वष्टा तेन स उच्यते ३९
यस्माद्विंश्वमिदं सर्वमादित्येनेह रश्मिभिः
विष्लृ व्याप्तौ मृतो धातुस्तस्मात् विष्णुः स उच्यते ४०
वृहदस्य शरीरं यदप्रमेयं प्रमाणतः
वृहविस्तार्णमित्युक्तं ब्रह्मा तेन स उच्यते ४१
पूज्यते च सुरैः सर्वैर्महांश्चै प्रमाणतः
धातुर्महेति पूजायां महादेवस्ततः स्मृतः ४२
यन्निदर्हति यत्तीच्णो यदुग्रो यत् प्रतापवान्

मांसशोणितमज्जादौ यत्तता रुद्र उच्यते ४३
यस्मात् सृष्ट्वानुगृणीते श्वसते चैव यत्पुनः
गुणात्मना तु त्रैकाले तस्मादेकः स उच्यते ४४
अयं परम यं नेति ब्रुवन्ते भिन्न दर्शनाः
तामसा मूढमावाश्च दृष्ट्वा तानि ब्रुवन्ति च ४५
ब्रह्माणं कारणं केचित् केचिदाहुर्दिवाकरम्
केचिद्भवं परत्वेन आहुर्विष्णुं तथापरे ४६
कारणं तु स्मृता ह्येते नानार्थेषु सुरोत्तमाः
एकः स तु पृथक्त्वेन स्वयम्भूरिति विश्रुतः ४७
यथा तु रज्यते वर्णैर्विचित्रैः स्फटिको मणिः
तथा गुणवशात्तस्य स्वयम्भोरनुरञ्जनात् ४८
एको भूत्वा महामेघः पृथक्त्वेनावतिष्ठते
वर्णतो रूपतश्चैव तथा गुणवशात्तु सः ४९
नभसः पतितं तोयं याति तोयान्तरं यथा
भूमे रस विशेषेण तथा गुणवशात्तु सः ५०
यथा द्रव्यविशेषाद्वा वायुरेकः पृथक् भवेत्
दुर्गन्धो वा सुगन्धो वा तथा गुणवाशात्तु सः ५१
यथा वा गार्हपत्योऽग्निरन्यत्संज्ञान्तरं व्रजेत्
दक्षिणाहवनीयादि ब्रह्मादिषु तथा ह्यसौ ५२
एकत्वे च पृथक्त्वे च प्रोक्तमेतन्निदर्शनम्
तस्माद् भक्तिः परा कार्या देवे तस्मिन् दिवाकरे ५३
एष ब्रह्मा च विष्णुश्च एष एव महेश्वरः
एष वेदाश्च यज्ञाश्च सर्गश्चैव न संशयः ५४
सूर्यव्याप्तमिदं सर्वं जगत् स्थ वर जङ्गमम्
अद्यते पीयते चैव अन्नपानात्मको रविः ५५
सर्वत्र सविता देवो नानाभिर्नामभिश्च सः

वृक्षे पुष्पे तथा वायौ व्योम्नि चाग्नौ च सर्वशः ५६
एवं विधो ह्ययं सूर्यः सदा पूज्यो विजानता
आदित्यं वेत्ति यस्त्वेनं स तस्मिन्नेव लीयते ५७
अप्येकं वेत्ति यो नाम धात्वर्थं निगमै रवेः
स रोगैर्वर्जितः सर्वैः सद्यः पापात् प्रमुच्यते ५८
नहि पापकृतः साम्ब भक्तिर्भवति भास्करे
तस्मात्त्वं परया भक्त्या प्रपद्यस्व दिवाकरम् ५९
इति श्रीसाम्बपुराणे सूर्यनिगमो नामाष्टमोऽध्यायः ८

## नवमोऽध्यायः

वशिष्ठ उवाच
एतच्छ्रुत्वा तु कार्त्स्न्येन हृष्टो जाम्बवतीसुतः
जातकौतूहलो भूयः परिपप्रच्छ नारदम् १
साम्ब उवाच
अहो सूर्यस्य माहात्म्यं वर्णितं हर्षवर्धनम्
येन मे भक्तिरूत्पन्ना परे देवे विभावसौ २
अतो राज्ञीं महाभागां निक्षुभां च महामुने
दण्डिनं पिङ्गलादींश्च एवमेतद् वदस्व मे ३
नारद उवाच
प्रागुक्तेऽर्कस्य ये भार्ये द्वे राज्ञयौ निक्षुभे शुभे
तयोश्च राज्ञीद्वययोर्ज्ञेया निक्षुद्या पृथिवी स्मृता ४
पौषस्य कृष्णसप्तम्यां द्वे अर्केण युज्यते
माघस्य कृष्ण सप्तम्यां मह्या सह भवेद्रविः ५
भूश्चादित्यश्च भगवन् गच्छतः सङ्गमं तदा
ऋतुस्नाता मही तत्र गर्भं गृह्णाति भास्करात् ६
द्यौर्जलं सूर्यतो गर्भं वर्षा ऋतुषु भूतले

तत्र लौकिक वार्तार्थं मही सस्यं प्रसूयते ७
सस्योपयोग संहृष्टा आहुतिं जुह्वति द्विजाः
स्वाहाकारैः वषट्कारैर्यजन्ते पितृदेवताः ८
निक्षुमान् कुरुते यस्मादोषधीभिः स्वधामृतैः
मर्त्यान् पितॄंश्च देवांश्च तेन भूर्निक्षुभा स्मृता ९
यथा राज्ञी द्विधा भूता यस्य चेयं सुता स्मृता
अपत्यानि च यान्यस्यास्तान् प्रवक्ष्याम्यतः परम् १०
मरीचिर्ब्रह्मणः पुत्रो मरीचेः पश्यपः सुतः
तस्माद्धिरन्यकशिपुः प्रह्लादस्तस्य चात्मजः ११
प्रह्लादस्य सुतो नाम्ना विश्रुतोऽथ विरोचनः
विरोचनस्य भगिना संज्ञाया जननी तु सा १२
हिरण्यकशिपोः पौत्री दितेः पुत्रस्य सा स्मृता
सा विश्वकर्मणः पत्नी प्रह्लादा चीच्यते बुधैः १३
अथ नाम्ना सुरूपेति मरीचेर्दुहिता शुभा
पत्नी त्वङ्गिरसः सा तु जननी च वृहस्पतेः १४
वृहस्पतेस्तु भगिनी भुवना ब्रह्मवादिनी
प्रभासस्य च सा पत्नी वसूनामष्टमस्य तु १५
प्रसूता विश्वकर्माणं सर्वशिल्पवतां वरम्
स वै नाम्ना पुनस्त्वष्टा त्रिदशानां स वर्धकिः १६
देवाचार्यस्य तस्येयं दुहिता विश्वकर्मणः
सुरेणुरिति विख्याता त्रिषु लोकेषु भाविनी १७
राज्ञी संज्ञा च सा स्त्री च प्रभा सैव तु भास्वतः
तस्या एषा तु या छाया निक्षुभा सा महीमयी १८
सापि भार्या भगवती मार्तण्डस्य महात्मनः
साध्वी पतिव्रता देवी रूपयौवनशालिनी १९
न तुल्यां तां न रूपेण ना सूर्यो वैभजत्पुरा

आदित्यस्य तु यद्रूपं महता स्वेन तेजसा २०
गात्रेषु प्रतिरुद्धेषु अतिकान्त इवाभवत्
अनिष्पन्नेषु गात्रेषु भगो दृष्ट्वा पिताब्रवीत् २०
आर्तस्त्वं भव मार्तण्ड मार्तण्डस्तेन स स्मृतः
इति श्री साम्बपुराणे राज्ञीनिक्षुभोत्पत्तिर्नाम नवमोऽध्यायः ९

## दशमोऽध्यायः

नारद उवाच
अतःपरं प्रवक्ष्यामि प्रजास्तस्य महात्मनः
त्रीण्यपत्यानि संज्ञायां जनयामास वै रविः १
द्वौ पुत्रौ सुमहाभागौ कन्यां कालिन्दिमेव च
मनुर्वैवस्वतो ज्येष्ठः श्राद्धदेवः प्रजापतिः २
ततो यमो यमी चैव यमजौ सम्बभूवतुः
तेजस्त्वभ्यधिकं तस्य नित्यमेव विवस्वतः ३
तेनातितापयामास त्रींल्लोकान् सचराचरन्
गोलाकारं तु तद्रूपं दृष्ट्वा संज्ञा विवस्वतः ४
संज्ञोवाच
असहन्ती तु तेत्तेजः स्वां छायां प्रेक्ष्य चाब्रवीत्
भव नारी स्वरूपा त्वं लक्षणैः सदृशी मम ५
एवमुक्त्वा समुत्तिष्ठत्तस्याः सदृशलक्षणा
महीमयी तु संज्ञायास्तस्या छाया समुत्थिता ६
प्राञ्जलिः प्रणता भूत्वा छाया संज्ञामभाषत
यदर्थमहमुत्पन्ना तदाज्ञापय शोभने ७
सर्वमेव करिष्यामि यद्यपि स्यात् सुदुष्करम्
संजोवाच
अहं यास्यामि भद्रन्ते स्वयमेव गृहं पितुः ८

निर्विकारेण वस्तव्यं त्वयेह भवने मम
इमौ च बालकौ ह्यङ्के कन्या च वरवर्णिनी ९
संभाव्यं नैव चाख्येयमिदं भगवतस्त्वया
छायोवाच
नाख्यास्यामि मतं तस्मै गच्छ देवि यथासुखम् १०
इत्युक्ता छायया संज्ञा जगाम भवनं पितुः
पितुः समीपं गत्वा तु व्रीडिता सा तपस्विनी ११
वर्षाणां तु सहस्त्रं वै वसमाना पितुर्गृहे
भर्तुः समीपं याहीति पित्रोक्ता सा पुनः पुनः १२
आगच्छत् वडवा भूत्वा त्यक्त्वा रूपं यशस्विनी
उत्तरांश्च कुरुन् गत्वा तृणान्यथ चचार ह १३
ततो गतायां संज्ञायां संज्ञाया वचनेन सा
संज्ञा रूपं ततः कृत्वा छाया सूर्यमुपस्थिता १४
द्वितीयायां तु संज्ञायायां सज्ञयमिति चिन्तयन्
भास्करा जनयामास पुत्रा कन्या च रूपिणीम् १५
पूर्वजस्य मनोस्तुल्यौ सादृश्येन च ताभुभौ
श्रुतश्रावश्च धर्मज्ञः श्रुतवर्मा तथैव च १६
श्रुतश्रवामनुस्ताभ्यां सावर्णेयो भविष्यति
श्रुतकर्मा स विज्ञेयो ग्रहो यो वै शनैश्चरः १७
कन्या च तपतो नाम्ना रूपेणाप्रतिमा भुवि
संज्ञा तु पार्थिवी तेषामात्मजानामथाकरोत् १८
स्नेहं न पूर्वजानां तु तथा कृतवती तु सा
मनुस्तु क्षमते तस्या यमस्तस्या न चक्षमे १९
बहु शोचोच्यमानस्तु पितुः पत्न्या सुदुःखितः
स वै कोपाच्च बाल्याच्च भाविनोऽर्थस्य वै बलात् २०
पादेन तर्जयामास छायां वैवस्वतो यमः

तं शशाप ततः क्रुद्धा संज्ञा सा पार्थिवी शुभा २१
पदा तर्जयसे यन्मां पितुर्भार्यां गरीयसीम्
तस्मात्तवैष चरणः पतिष्यति न संशयः २२
यमस्तु तेन शापेन भृशं पीडितमानसः
मनुना सह धर्मात्मा पृष्ठः सर्वं न्यवेदयत् २२
स्नेहेन तुल्यमस्मासु माता देव न वर्तते
सन्त्यज्य प्रायशोऽस्मान् सा कनीयांसो विधित्सति २४
तस्या मयोद्यतः पादो नैव देहे निपातितः
बाल्याद् वा यदि वा मोहात् तत् भवान् वक्तुमर्हति २५
शप्तोऽहमेव देवेश जनन्या तपताम्वर
तव प्रसादाच्चरणस्त्रायतां महतो भयात् २६
रविरुवाच
असंयं महत् पुत्र भविष्यत्यत्र कारणम्
येन त्वामाविशत् क्रोधो धर्मज्ञं धर्मशालिनम् २७
सर्वेषामेव शापानां प्रतिपातस्तु विद्यते
नहि मन्त्राभिशप्तानां क्वचिन्मोक्षो भवेदिह २८
न शक्यमेतन्मिथ्या तु कर्तुं मातुर्वचस्तव
क्वचित्तेऽहं विधास्यामि पुत्रस्नेहादनुग्रहम् २९
कृमयो मांसमादाय पतिष्यन्ति महीतले
कृतमस्या वचः सत्यं त्वं च त्रातो भविष्यसि ३०
नारद उवाच
आदित्यस्त्वब्रवीच्छायां किमर्थं तनयेषु वै
तुल्येष्वभ्यधिकः स्नेहः कुत्र च क्रियते त्वया ३१
तत्त्वां निहन्मि पापेऽहं नावचक्षे च मां यदि
आत्मानं स समाधाय शप्तुमुमचक्रमे ३२
तां शष्टुकामो भगवान् नाशाय कृपितः प्रभुः

ततश्छाया यथा वृत्तमाचचत्ते विवस्वतम्  ३३
विवस्वांस्तु ततः श्रुत्वा क्रुद्धस्त्वष्टारमभ्यगात्
सचापि तं यथान्यायमर्थित्वाऽतिरोषितम्  ३४
निर्दग्धुकामं रोषेण सान्त्वयामास तं शमैः
विश्वकर्मोवाच
तवातितेजसाविष्टमिदं रूपं सुदुःसहम्  ३५
असहन्ती तु सा संज्ञा वने वसति शाद्वले
इत्तातां तां भवानद्य स्वां भार्यां शुभचारिणीम्  ३६
कृपार्थं भवतोऽरण्ये चरन्तीं सुमहन्तपः
मतं मे ब्रह्मणो वाक्यं यदि ते देव रोचते  ३७
रूपं निवर्तयाम्यत्र तव कान्तमरिन्दम
रूपं विवस्वतश्चासीत्तिर्यगूर्ध्वमधः समम्  ३८
तेनातिपीडितो देवो रूपेण ते दिवस्पतिः
सन्तुष्टस्तस्य तद्वाक्यं बहु मेने महातपाः  ३९
अनुज्ञातस्ततस्त्वष्टा रूपनिवर्तनस्य तु
विश्वकर्माभ्यनुज्ञातः शाकद्वीपे विवस्वतः  ४०
भ्रमिमारोप्य तत्तेजः शातपामास तस्य वै
आज्ञानुलिखितश्चासौ निपुणं विश्वकर्मणा  ४१
नाभ्यनन्दत् तलिलखनं ततस्तेनावतारितः
तत्तु निष्पादितं रूपं तेजसापहृतेन तु  ४२
कान्तात् कान्ततरं भूत्वा अधिकं शुशुभे ततः
ददर्श योगमास्थाय स्वां भार्यां बडवां तदा  ४३
अधृष्यां सर्वभूतानां तेजसा स्वेन संवृताम्
अश्वरूपेण मार्तण्डस्तां मुखे समभावयत्  ४४
मैथुनाय विचेष्टन्तीं परपुंसो विशंकया
सा तद्विवस्वतश्शुक्रं नासिकाभ्यां निरावमत्  ४५

देवौ तस्यामजायेतामश्विनौ भिषजाम्वरौ
नासत्यश्चैव दस्त्रश्च तौ तौ नामतोऽश्विनौ ४६
ततः कान्तं स्वकं रूपं दर्शयामास भास्करः
तं दृष्ट्वा सापि संज्ञा तु ततोष च मुमोद च ४७
तस्माच्च शुक्रसंयोगात् गुणाद् भूमेस्तथैव च
अश्वारूढः शरी धन्वी कुमारः समजायत ४८
स्वतो यं रेतसो जातः तेन देवेन भावितो
रेवन्तोनामतस्त्वेष ख्यातिं लोके गमिष्यति ४९
मत्या दयार्जितो लोकात् पूजां प्राप्स्यति नित्यशः
प्लवन्गच्छन् सदा यस्मात् वसुमत्यां यतस्ततः ५०
मनुर्यमो यमी चैव सावर्णिश्च शनैश्चरः
तपती चाश्विनौ चैव रेवन्तश्च रवेःसुताः ५१
एवमेषा पुरा संज्ञा द्वितीया पार्थिवी स्मृता
या संज्ञा सा स्मृता राज्ञी छाया या सापि निक्षुया ५२
राजृ दीप्तौ स्मृतो धातुः राजा राजयते सदा
अधिकं सर्वभूतेभ्यो राजते च दिवाकरः ५३
अधिकं राजते यस्मात् तस्मात् राजा स उच्यते
राजपत्नी तु सा यस्मात् तेन राज्ञी प्रकीर्तिता ५४
ते यं सञ्चालिता यस्मात् राज्ञा यत्तदुपाहृतम्
क्षुभसञ्चलने धातुर्निक्षुभा तेन निश्चला ५५
भवत्यतीव यस्माद् वा स्वर्गेऽपि क्षुद्विवर्जिता
छायाति विशते दिव्या स्मृता सा तेन निक्षुभा ५६
यमस्तु तेन शापेन भृशं पीडितमानसः
धर्मेण रक्षयामास धर्मराजस्ततोऽभवत् ५७
शुभेन कर्मणा चैव स प्राप्तः परमां द्युतिम्
पितॄणामाधिपत्यञ्च लोकपालत्वमेव च ५८

यस्तु ज्येष्ठो मनुस्तेषां सर्गस्तस्य तु साम्प्रतम्
तस्याच्चैक्ष्वाकवो वंशो यस्मिन् जातो वृहद्बलः ५९
कनीयसी तयोर्या तु यमी कन्या यशस्विनी
अभवत्सा सरिच्छ्रेष्ठा यमुना लोकपावनी ६०
मनुः प्रजापतित्वे च सावर्णिः सु महातपः
भाव्यः सो नागते तस्मिन् मनुः सावर्णिके तरे ६१
मेरु पृष्ठे तपो दिव्यमद्यायि चरति प्रभुः
भ्राता शनैश्चरस्तस्य ग्रहत्वं स तु लब्धवान् ६२
तपती नाम या भानोः तपोः कन्या कनीयसी
सा बभूव शुभा पत्नी राज्ञः सम्बरणस्य तु ६३
तपती नाम नदीत्वं तु विन्ध्यपादाद् विनिः सृता
नित्यं पुण्यजला स्नाने मार्तण्डतनया शुभा ६४
आश्विनौ देववैद्यत्वं लब्धवन्तौ यशस्विनौ
तयोः कर्मोपजीवन्ति लोकेस्मिन् भिषजः शुभम् ६५
देवन्तो नाम योऽर्कस्य रूपेणाप्रतिमः सुतः
सत्वोपपायनः सोऽथ शीघ्रमेव प्रसीदति ६६
क्षेमेण व्रजतेऽध्वानं यस्तु पूजयते पथि
सुखं प्रसादा मर्त्यानामाख्यास्यति यथासुखम् ६७
य इदं जन्म देवानां शृणुयाद्वा पठेत्तथा
विवस्वतोऽथ पुत्राणां सर्वेषाममितौजसाम् ६८
आपद प्राप्य मुच्येत प्राप्नुयाच्च महद्यशः
इति श्रीशाम्बपुराणे दशमोऽध्यायः १०

## एकादशोऽध्यायः

साम्ब उवाच
शरीरलिखनं भानोरुक्तं संक्षेपतस्त्वया

विस्तराच्छ्रोतुमिच्छामि तन्ममाचक्ष्व सुव्रत १
नारद उवाच
पितुर्गृहं गतायां तु संज्ञायां यदुनन्दन
भास्कराश्चिन्तयामास संज्ञा मद्रूप काङ्क्षिणी २
पथा पितुर्गृहं यच्च तपस्तेपे यशस्विनी
तस्मान्मनीषितं तस्याः पूरयामि मनोरथम् ३
एतस्मिन्नन्तरे ब्रह्मा तत्रागत्य दिवाकरम्
ऊचे मधुरया वाचा रवेः प्रीतिकरं वचः ४
आदिदेवोऽसि देवानां ज्ञातमेतत् स्वयं मया
श्वसुरो विश्वकर्मा ते रूपं निर्वर्तयिष्यति ५
एवमुक्त्वा रविं ब्रह्मा विश्वकर्माणमब्रवीत्
निवर्तयास्य रूपं त्वं मार्तण्डस्य तु शोभनम् ६
ततो ब्रह्म समादेशात् भ्रमिमारोप्य भास्करम्
रूपं निवर्तयामास निश्वकर्मा शनैः शनैः ७
ततस्तुष्टाव तं ब्रह्मा न वै देव गणैः सह
गुह्यैर्नानाविधैः स्तोत्रैर्वेद वेदाङ्गसम्मितैः ८
स्वस्ति तेऽस्तु जगन्नाथ वर्षधर्महिमप्रभ
शान्तिं जुषस्व लोकानां देवदेव दिवाकर ९
ततो रुद्रश्च विष्णुश्च भक्त्या तुष्टुवतुस्तदा
तेजस्ते वर्धतां देव लिख्यमानं दिवस्पते १०
इन्द्रस्त्वागत्य तं देवं लिख्यमानमथास्तुवत्
जयदेव जयस्वेति शश्वज्जय जगत्पते ११
ऋषयश्च ततः सप्त विश्वामित्र पुरोगमाः
तुष्टुवुर्विविधैस्तोत्रैः स्वस्ति स्वस्तीति वादिनः १२
वेदोक्तरर्ध्यवार्णामर्वालखिल्याश्च तुष्टुवुः
त्वं तात मोक्षिणां मोक्षे ध्येयस्त्वं ध्यायिनां सदा १३

त्वं गतिः सर्वसत्वानां त्वयि सर्वं प्रतिष्ठितम्
सत्यम्प्रजाभ्यस्तु देवेश प्रसन्नस्त्वं जगत्पते १४
तथा विद्याधरगणा यक्षराक्षसपन्नगाः
कृताञ्जलिपुटास्सर्वे शिरोभिः प्रणता रविम् १६
ऊचिरे विविधा वाचो मनः श्रोत्रसुखावहाः
सह्यं भवतु तेजस्ते भूतानां भूतभावन १६
ततो हाहा हुहूश्चैव तुम्बुरुर्वारदस्तथा
उपगायितुमारेमे गान्धर्वकुशला रविम् १७
षड्जमध्यम गान्धारग्रामत्रयविशारदाः
मूर्च्छनाभिश्च तालैश्च सन्धारितशकैः शिकैः १८
विश्वाची च घृताची च उर्वशी सतिलोत्तमा
मेनका च सुजान्या च रम्भा चाप्सरसाम्बराः १९
उपनर्तितुमारब्धा लिख्यमानं विभावसुम्
हावभाव विलासैश्च कुर्वन्त्योऽभिनयान् बहून् २०
ततः तीव्रलयं गेयं मधुरं चाभ्यवर्तत
सर्वेषामेव देवनां मनः श्रोत्रसुखप्रदम् २१
प्रवाद्यन्त ततस्तन्त्रीवीणादेवादि दर्दुराः
पणवाः पुष्कराश्चैव मृदङ्गाः पटहास्तथा २२
देवदुन्दुभयः शङ्खः शतशोऽथ सहस्रशः
गायद्भिश्चैव गन्धर्वैर्नृत्यद्भिश्च प्सरोगणैः २३
सूर्यवादित्रघाषैश्च सर्वं कोलाहलंकृतम्
ततः कृतैः करपुटैः पद्मकञ्जल्कसन्निभैः २४
ललाटोपरि विन्यस्तैः प्रणेभुः सर्वदेवतः
ततः कोलाहले तस्मिन् सर्वदेवसमागमे २५
तेजसः शातनं चक्रे विश्वकर्मा शनैः शनैः
इति हिमजलधर्मकालहेतो हरकमलासन विष्णुसंस्तुतस्य

तनु परिलिखनं निगद्य भानोर्व्रजति दिवाकर लोकमायुषोऽन्ते २६
इति श्रीशाम्बपुराणे एकादशोऽध्यायः ११

द्वादशोऽध्यायः

शास्ब उवाच
तस्मिन् काले भ्रमेरूपे लिख्यमानो दिवस्पतिः
ब्रह्मादिभिर्यथादेवः स्तुतो वै तद् वदस्व मे १
नारद उवाच
नमः तमः पटलपटावपाटिने पावनातिशय पुण्यकर्मणे
नैककाम विषय प्रदायिने भास्कराव नमः पूषमालिने २
प्रयत्नतः प्रणतहितानुवन्धिने मरुत्वतः समजवसप्तसप्तवे
विवस्वते कमलकुलावबोधिने सर्वलोकहितकारिणे नमः ३
अजाय लोकत्रयभावनाय भूतात्मने गोपतये वृषाय
नमो महाकारुणिकोत्तमाय सूर्याय चक्षुः प्रभवालयाय ४
विवस्वते ज्ञानवतेऽन्तरात्मने जगत्प्रतिष्ठाय जगद्धितैषिणे
स्वयम्भुवे लोकसमस्तचक्षुषे सुरोत्तमायामित तेजसे नमः ५
क्षणमुद्याचलमौलिमणिः सुरगणवन्द्योऽपि हितो जगतः
त्वमुरुसहस्रमयूखसहस्रवपुर्जगति विभाति तमांसि नुदन् ६
तव तिमिरासवपानमदात् भवति विलोहित विग्रहता
मिहिर विभासि यतः सुतरां त्रिभुवनभावन भाप्रकरैः ७
रथमधिरुह्य समावयवैः परिविधि कल्पित भूरुचिरम्
सततमखिन्नहयैर्भगवंश्चरसि जगत्स्थितयेऽविरतम् ८
ततो लिखितुमारब्धं प्रहृष्टेनान्तरात्मना
विश्वकर्मा च मार्तण्डं स्तोत्रेणानेन संस्तुवन् ९
अमृतसुधादिरसेन समं सुर गण भूत गणेन समम्
प्रणिपतितैकपदत्रितयं शुकसमवर्णहयप्रथितम् १०

तव पद पांशु पवित्रतमम् अभिरतवत्सल मां प्रणतम्
त्रिभुवनपावनपाहि रवे विविध गदादियुतं सततम्
इति श्रीशाम्बपुराणे द्वादशोऽध्यायः ॥

## त्रयोदशोऽध्यायः

शाम्ब उवाच
भूयोऽपि कथय त्वं माम् कथां सूर्यसमागताम्
न तृप्तिमधिगच्छामि शृणवन्नेतां कयां शुभाम् १
नारद उवाच
आदित्यस्य कथां दिव्यां सर्वपापप्रणाशिनीम्
वक्ष्यामि कथितां पूर्वं ब्रह्मणा लोकभाविना २
ऋषयः परिपृच्छन्ति ब्रह्म लोके पितामहम्
तापिताः सूर्यकिरणैस्तेजसा सम्प्रमोहिताः ३
ऋषिरुवाच
कोऽयं दीप्तो महातेजा वह्निरश्मिसमप्रभः
एतद् वेदितुमिच्छामः प्रभावोऽस्य कुतः प्रभो ४
ब्रह्मोवाच
तमोभूतेषु सर्वेषु नष्टेस्थावरजङ्गमे
प्रवृत्ते गुणहेतुत्वे पूर्वं बुद्धिरजायत ५
अहङ्कारस्ततो जातो महाभूत प्रवर्तकः
वाय्वग्निजलखंभूमिस्ततस्त्वण्डमजायत ६
तस्मिन्नण्डेस्विमे लोकाः सप्त वै सुप्रतिष्ठिताः
पृथिवी सप्तभिर्द्वीपैः समुद्रैश्चैव सप्तभिः ७
तत्रैवावस्थितो ह्यासन्नहं विष्णुर्महेश्वरः
विमूढास्तपसा सर्वे प्रध्यायन्तीश्वरं पदम् ८
ततो चिन्त्यं महत्तेजः प्रादुर्भूतं तमोनुदम्

ध्यानयोगेन चास्माभिर्विज्ञातः सविता तदा ९
ज्ञात्वा च परमात्मानं सर्व एव पृथक् पृथक्
दिव्याभिःस्तुतिभिर्देवास्त स्तोतुमुपचक्रमुः १०
आदिदेवोऽसि देवानामैश्वर्याच्च त्वमीदृशः
आदिकर्तासि भूतानां देवदेवो दिवाकरः ११
जीवनः सर्वसत्वानां देवगन्धर्वराक्षसाम्
मुनिकिन्नरसिद्धानां तथैवोरगपक्षिणाम् १२
त्व ब्रह्मा त्व महादेवस्त्वं विष्णुस्त्वं प्रजापतिः
वायुरिन्द्रश्च सोमश्च विवस्वान् वरुणस्तथा १३
त्वं कालः सृष्टिकर्ता च हर्ता भर्ता प्रभुस्तथा
सरितः सागराः शैलाः विद्युदिन्द्रधनूंषि च १४
प्रलयः प्रभवश्चैव व्यक्ताव्यक्तः सनातनः
ईश्वरात् परतो विद्या विद्यायायाः परतः शिवः १५
शिवात् परतरो देवस्त्वमेव परमेश्वरः
सर्वतः पाणिपादान्तः सर्वतोऽक्षिशिरोमुखः १६
सर्वतः श्रुतिमांल्लोके सर्वमावृत्य तिष्ठति
सहस्रांशुः सहस्राक्षः सहस्र वरणेक्षणः १७
भूतादिर्भूर्भुवः स्वश्च महः सत्यं तपो जनः
प्रदीप्तं दीपनं दिव्यं सर्वलोकप्रकाशनम् १८
दुर्निरीक्ष्यं सुरेन्द्राणां यद्रूपं तस्य ते नमः
सुरसिद्धगणैर्जुष्टम् भृग्वत्रिपुलहादिभिः १९
स्तुतं परममव्यक्तं यद्रूपं तस्य ते नमः
वेद्यं वेदविदां नित्यं सर्वज्ञानसमन्वितम् २०
सर्वदेवातिदेवस्य यद्रूपं तस्य ते नमः
विश्वकृद्विश्वभूतिश्च वैश्वानरसुरार्चितम् २१
विश्वस्थितमचिन्त्यं च यद्रूपं तस्य ते नमः

परं वेदात् परं यज्ञात् परं लोकात् परं दिवं २२
परमात्मेति विख्यातं यद्रूपं तस्य ते नमः
अविज्ञेयमनालङ्ध्यमध्यात्मगति चाव्ययम् २३
अनादिनिधनं चैव यद्रूपं तस्य ते नमः
नमो नमः कारणकारणाय नमोनमः पाप विमोचनाय
नमो नमो वन्दित वन्दिताय नमो नमो रोगविनाशनाय २४
नमो नमः सर्ववरप्रदाय नमोनमः सर्वधनप्रदाय
नमो नमः सर्वसुखप्रदाय नमो नमः सर्वमतिप्रदाय २५
स्तुतः स भगवान् देवस्तैजसं रूपमास्थितः
उवाच वाचं कल्याणीं को वरो वश्च दीयताम् २६
ब्रह्मोवाच
तवातितैजसं रूपं न कश्चित् सोढुमुत्सहेत्
सुमह्यं भवत्वेतद्धिताय जगतः प्रभो २७
एवमस्त्विति सोऽप्युक्त्वा भगवान् दिनकृद् विभुः
लोकानां कार्यसिद्ध्यर्थं धर्मवर्षहिमप्रदः २८
अतः सांख्याश्च योगाश्च ये चान्ये मोक्षकाङ्क्षिणः
ध्यायन्ति ध्यायिनो नित्यं हृदयस्थं दिवाकरम् २९
सर्वलक्षणहीनोऽपि युक्तो वा सर्वपातकैः
सर्वं च तरते पापं देवमर्कसमाश्रितः ३०
अग्निहोत्रञ्च वेदाश्च यज्ञाश्च बहुदक्षिणाः
भानोर्भवितनमस्कारात् कलां नार्हति षोडशीम् ३१
तीर्थानां परमं तीर्थं मङ्गलानाञ्च मङ्गलम्
पवित्राणां पवित्रञ्च प्रपद्यैनं दिवाकरम् ३२
ब्रह्माद्यैः संस्तुतं देवैर्ये नमस्यन्ति भास्करम्
सर्वकित्विष निर्मुक्ताः सूर्यलोके व्रजन्ति ते ३३
इति श्रीशाम्बपुराणे ब्रह्मभाषितस्त्रयोदशोऽध्यायः १३

## चतुर्दशोऽध्यायः

शाम्ब उवाच
शरीरं लिखतं भानुः कथं वै प्रतिपादितः
देवैर्वा ऋषिभिर्वापि तन्ममाख्यातुमर्हसि १
नारद उवाच
ब्रह्मलोके सुखासीनं ब्रह्मणं ससुरासुनः
ऋषयश्चोपसंगम्य इदमूचुः समाहिताः २
ब्रह्मन्नदितेः पुत्रो य एष दिवि राजते
मार्तण्ड इत् विख्यात स्तिग्मतेजाः महातपाः ३
अस्य तेजाभिखिलं जगत्स्थावरजङ्गमम्
क्लिश्यमानमनोक्रन्दमुपेक्षसि कथं प्रभो ४
वयमप्याहिताः शङ्कां तेजसा सम्प्रमोहिताः
दिवि भुव्यन्तरिक्षे च शर्म नोपलभामहे ५
एवमुक्तस्तु भगवानुवाच कमलासनः
तमेव शरणं देवं गच्छामः सहिता वयम् ६
ततस्तमुद्यतमुग्रं शैलराजावतंसकम्
सप्रजापतयः सर्वे संस्तोतुमुपचक्रमुः ७
ब्रह्मोवाच
नमोनमः सुरवरतिग्मतेजसे नमोनमः प्रणतहितानुकम्पिने
नमोनमस्त्रिभुवनभूतभाविने क्रतुक्रियासत्फलं सम्प्रदायिने ८
शुभाशुभ प्रविचयकर्म साक्षिणे सहस्त्र संदीधितये नमोनमः
प्रशक्तसप्ताश्वयुतान्तपक्षिणे ध्रुवैकरश्मिग्रथितायते नमः ९
सवाललित्यापसरकिन्नरोरगैः ससिद्धगन्धर्वपिशाचगुह्यकैः
सयक्षरक्षोगणचारणोत्तमैः नमोनमः संस्तुतवन्दिताय ते १०
यदा रसान् संसृजसे शरीरिणः गभस्तिभिर्हिमजलधर्मविश्रवैः
जगच्च संशोषयसे ससागरं नमसप्तदाम्नाय प्रदिप्तमास्वते ११

जडान्धमूकान् बधिरान् सकुञ्जकान् सदद्रुकुष्ठान् कृमिभिस्स्त्रवद्व्र-
णात्
करोषि तानेव पुनर्नवान् यदा तदामहाकारुणिकाय ते नमः १२
यदौदरं ज्योतिरबिन्धनं च यत् यदप्सु तेजो यदपीह चक्षुषि
अग्नौ यदुष्णं भगणे यदाहितं तवैव तद्रूपमनेकधास्थितम् १३
सुरद्विषः सागरतोयवासिनः प्रचण्डपाशासि परश्वधायुधाः
समुत्थिता ये भुवि पाप चेतसः प्रयान्ति नाशं तव देवदर्शनात् १४
स्तुतः स भगवानेवं प्रजापतिमुखैः सुरैः
मत्वा तेषामभिप्रायमुवाच भगवानिदम् १५
हितं चोपहितं नित्यं गायत्र्यं यद्वचःपरम्
तद्वै ब्रूत सुराः क्षिप्रं किं मया क्रियतां स्वयम् १६
लब्धानुज्ञास्ततस्ते तु सुराः संहृष्टमानसाः
त्वष्टारं पूजयामासुर्मनोवाक्कायकर्मभिः १७
ततस्तं तेजसो राशिं सर्वलोकविधानवित्
भ्रमिमारोपयामास विश्वकर्मा विभावसुम् १८
अमृतेनाभिषिक्तस्य स्तूयमानस्य चारणैः
तेजसः शातनं चक्रे विश्वकर्मा शनैः शनैः १९
आजानुलिखितश्चासौ सुरासुरमनोरगैः
नाभ्यनन्दत् स लिखनं ततस्तेनावतारितः २०
ततः प्रभृति देवस्य चरणौ नित्यसंवृत्तौ
तापयन् ह्लादयंश्चैव युक्ततेजाभवत्ततः २१
शातितञ्चास्य यत्तेजस्तेन चक्रं विनिर्मितम्
येन विष्णुर्जघानोग्रान् दानवानमितौजसः २२
मूलशक्तिगदाचक्रशरासनपरश्वधान्
दैवतेभ्यो ददौ कृत्वा विश्वकर्मा महामतिः २३
ब्रह्मवक्त्रोदभवं स्तोत्रं संध्ययोरुभयोर्जपन्

कुलं पुनाति पुरुषो व्याधिभिर्न च पीड्यते २४
प्रजावान् सिद्धकर्मा च जीवेत् साग्रं शरच्छतम्
पुत्रवान् धनवांश्चैव सर्वत्रैवापराजितः २५
विभिन्नप्राणसंघातः सावित्र्यं लोकमप्नुयात्
इति श्री शाम्बपुराणे ब्रह्मस्तोत्रं नाम चतुर्दशोऽध्यायः १४

## पञ्चदशोऽध्यायः

नारद उवाच
अतः परं प्रवक्ष्यामि दण्डनायकपिङ्गलौ
राज्ञस्त्रोषौ तथा चान्यान् दिग्देवान् दिण्डिना सह १
ब्रह्मणा सह संगम्य पूरा दैवैर्विचारितम्
एष कारुणिकः सूर्यो दैत्येभ्यो दास्यते वरान् २
ते तु लब्धवरा भूत्वा वधिष्यन्तो दिवौकसः
तस्मात्तेषां विधातार्थमेधामः प्रणता वयम् ३
अस्माभिः प्रतिरुद्धास्ते न द्रक्ष्यन्ति दिवाकरम्
संमन्त्र्यैवं ततस्त्विन्द्रो वामपार्श्वे रवेः स्थितः ४
दण्डनायकसंज्ञस्तु सर्वलोकस्य स प्रभुः
सिक्तश्च स तदार्केण त्वं प्रजा दण्डनायकः ५
दण्डनीतिकरो यस्मात्तस्माद्दण्डनायकः
लिखते यः प्रजानान्तु सुकृतं यश्च दुःकृतम् ६
अग्निर्दक्षिण पार्श्वे तु पिङ्गलत्वात् स पिङ्गलः
अश्विनौ चापि सूर्यस्य पार्श्वयोरुभयोः स्थिता ७
अश्वरूपात् यमुत्पन्नौ तेन तावश्विनौ स्मृतौ
पूर्वे द्वारे स्थितौ तस्य राज्ञस्तोषौ महाबलौ ८
कार्तिकेयः स्मृतो राज्ञः स्तोषश्चापि हरः स्मृतः
राजृदीप्तौ स्मृतो धातुर्नकारः प्रत्ययोऽस्य तु ९

सुरसेनापतित्वेन स यस्माद्दीप्यते सदा
तस्माच्च कार्तिकेयस्तु नाम्मा राज्ञ इति स्मृतिः १०
तुस गतौ स्मृतो धातुः तस्य स प्रत्ययः स्मृतः
गच्छत्यतीव यत्तस्माद् धरस्तोऽषोऽभिधीयते ११
खरं हि दुरितिक्रान्तं कृत्वा द्वारमवस्थितौ
पक्षिप्रेताधिपौ नाम्ना स्मृतौ कल्माषपक्षिणौ १२
वर्णस्य शवलत्वात्तु यमः कल्माष उच्यते
पक्षोऽस्यास्तीत्यतः पक्षी गरुडः परिकार्तितः १३
स्थितो दक्षिणतस्तस्य जानूद्कारः समाठरः
आन्दकारश्चित्रगुप्तो माठरः काल उच्यते १४
यमस्यार्थकरो नित्यं चित्रगुप्तो महामतिः
कालो जान्द इति प्रोक्तो जान्दकारस्ततस्तु सः १५
दक्षिणस्यां निवासोऽस्य दिशि यस्मात्तु नित्यशः
धातुर्मठनिवासेति कालस्तेन तु माठरः १६
प्राप्नुयानक्षतापौ तु रवेः पश्चिमतः स्थितौ
क्षुतापो वरुणो ज्ञेयः प्राप्नुयानस्तु सागरः १७
उत्तरेण स्थितोऽर्कस्य कुबेरः स विनायकः
कुबेरो धनदो ज्ञेयो हस्तिरूपो विनायकः १८
रेवन्तश्चैव दिण्डिश्च द्वावेवं पूर्वतः स्थितौ
दिण्डिर्ज्ञेयस्तयो रुद्रो रेवन्तस्तु तयो रवेः १९
इत्येतेऽनुचराः प्रोक्ताः संख्यां चैषां निबोध मे
माठरो जान्दकारश्च धनदोऽथ विनायकः २०
प्राप्नुयानक्षुतापौतौ द्वौ च कल्माषपक्षिणौ
आश्विनौ तु ततो ज्ञेयौ दण्डनायक पिङ्गलौ २१
सखरद्वारिकौ ज्ञेयौ राज्ञस्तेषौ ततः स्मृतौ
रेवन्तश्चैव दिण्डिश्च इत्येतेऽनुचराः स्मृताः २२

दशाष्टौ च सभाख्याताः संक्षेपात् संख्यया पुनः
इति ते नामभिः स्तुत्यै दानवार्थं विनायकाः २३
परिवार्य स्थिताः सूर्यं नानाप्रहरणायुधाः
स्वरूपाश्चान्यरूपाश्च विरूपः कामरूपिणः २४
परिवार्य स्थिताः सूर्यं गणरूपाश्च देवताः
ऋचो यजूंषि सामानि प्राङ्मयोक्तानि यानि तु २५
नानारूपस्थितान्येवं रवेस्तानि समन्ततः
नारद उवाच
वक्ष्याम्यथातः पुनरेव दिण्डिं सूर्यस्य सर्वप्रवरप्रधानम्
व्योमावसत्तिष्ठति यस्तु लग्नः सोऽप्युच्यते रुद्र इहापि दिण्डी २६
छित्वा पुरा ब्रह्मशिरः किलासौ प्रगृह्य तत्रास्य शिरःकपालम्
वहूदकं पुष्पफलरूपेतं नग्नो ययौ दारुवनम् ऋषीणाम् २७
दृष्ट्वा तु तं भैक्ष्यवरं सुरेशं क्षुब्धाः स्त्रियो नग्नवशप्रपाताः
योषित्सु तासु क्षुभितासु सर्वे जघ्नुर्हरन्त मुनयः सुरुष्टाः २८
स हन्यमानो मुनिमुख्यसंघैर्ग्रहीतलोष्ठैः ऋषिर्दण्डकाष्ठैः
विहाय तं देशमजस्वरूपी ततो रवेर्लोकमथा जगाम २९
आगच्छमानं प्रवरास्तमूचुः देवेश नित्यं भ्रमसे किमर्थम्
स प्राह तान् पापविमाचनार्थं भ्रमामि तीर्थानि सुरालयांश्च ३०
ते भूय ऊचुः प्रवरास्तमेवमत्रैव तिष्ठस्व रवेः पुरस्तात्
शुद्धिं तवैवैष करिष्यतीह शुद्धस्ततो यास्यसि रुद्रलोकम् ३१
इत्येवमुक्तः प्रवरैः स रुद्रस्तत्रैव तस्थौ रवितोषणार्थम्
नग्नो जटी यष्टिकपालपाणी रूपेण चैवाप्रतिमस्त्रिलोकम् ३२
उक्तः स तुष्टेन ततः सवित्रा प्रीतोऽस्मि देवागमनात्तवाहम्
मद्दर्शनादेव भवान् विशुद्धो दिण्डिश्च नाम्ना भवितासि लोके ३३
स्थानं व्रजस्व स्वमतीवपुण्यं पापापहं लौकिकनामधेयम्
त्यक्त्वा कपालं प्रविशुद्धमूर्तिर्मया सह स्थास्यति तत्र नित्यम् ३४

अष्टादशैतत् प्रवरास्तु भानोश्चतुर्दशान्येव रवेरधस्तात्
देवौ च तौ द्वौ तु अपि प्रधानौ गन्धर्वसूर्यावमितप्रमाणौ ३५
यक्षौ च यौ द्वौ च निशाचरौ तु नृत्ये च ये चात्सरसां वरिष्ठे
वसन्ति ये हार्तिषु खेप्सु सूर्ये तेषांमशीतिश्चतुरुत्तराणाम् ३६
इति श्रीशाम्बपुराणे पञ्चदशोऽध्यायः १५

## षोडशोऽध्यायः

नारद उवाच
दिण्डिप्रोक्तमिदंचापि शृणु शाम्ब महास्तपम्
प्रणम्य शिरसा देवमुद्यन्तं दिवाकरम् १
भवत्या भानुं प्रपद्येऽहं सर्वपापप्रणाशनम्
देवदानवयज्ञाणां ग्रहाणां ज्योतिषामपि २
तेजसाभ्यधिकं देवं व्रजामि शरणं प्रभुम्
एवमुक्त्वा विरूपाक्षो ध्यानासक्तो वभूव ह ३
ध्यानात् संस्मृत्य मनसा पौराणीमात्मनस्तनुम्
वाग्भिस्तुष्टाव तं देवं तमोघ्नं रश्मिमालिनम् ४
दिवि स्थितम् च पूषाग्रैर्द्योतयन्तं दिशो दश
वसुधामन्तरिक्षं च व्याप्तवन्तं मरीचिभिः ५
आदित्यं भास्करं सूर्यं सवितारं दिवाकरम्
छन्दोभिरश्वरूपैश्च सकृद्युक्तैर्विहङ्गमैः ६
उदयास्तमने युक्तं सदा मेरोः प्रदक्षिणम्
अमृतं भूतसत्यं च पुण्यतीर्थं पृथक्पृथक् ७
विश्वस्थितमचिन्त्यं च प्रपन्नोऽस्मि प्रभाकर
त्वं ब्रह्मा त्वं महादेवस्त्वं विष्णुस्त्वं प्रजापतिः ८
वायुराकाशमापश्च पृथिवीगिरिसागराः
ग्रहनक्षत्रचन्द्रार्कगणस्य त्व त्वमौषधम् ९

व्यक्ताव्यक्तेषु भूतेषु धर्माधर्मप्रवर्तकम्
दर्शनादेव ते देव मुक्तोऽहं ब्रह्महत्यमा १०
दिव्यं पश्यामि ते रूपं प्रकाशं ज्ञानचक्षुषा
तडिद्भिरिव दीप्ताभिर्गोभिर्लोकान् प्रकाशयन् ११
धारयन् दृश्यसे चपि विभूतिं पारमेश्वरीम्
एवं स्तुतः स देवेशस्तुष्टः प्रोवाच तं हरम् १२
ज्ञानमेश्वर्यमोक्षं च क्षराक्षर विकल्पना
सहत्त्वं सूक्ष्मता चैव सर्वभूतेष्ववस्थितिः १३
सर्वं तत्तुल्यमस्माकमहं यत् स भवानपि
ब्राह्मी माहेश्वरी चैव वैष्णवी चैव या तनुः १४
एकः स पुरुषो भूत्वा कारणादुद्वहा स्थितिः
एतत् ज्ञात्वा महाज्ञानं ज्ञात्वा मामात्मनस्तनुम् १५
अत्रैव देव तिष्ठ त्वं विमुक्तो ब्रह्महत्यया
अविमुक्त इहागत्य मुक्तस्त्वं पाप्मना यथा १६
अविमुक्तं तथा नाम्ना क्षेत्रमेतद् भविष्यति
यं च क्रोशपरीमाणे यस्मिन् क्षेत्रे नराः स्थितिः १७
आवयोः प्रणमिष्यन्ति ते भविष्यन्त्यकल्मषाः
पठन् शृण्वंस्तथा चेमं पुण्यं सम्वादमावयोः १८
किल्विषाच्च विमुच्येत च महाभयात्
चक्षुः पीडां मनः पीडां ग्रहपीडां तथैव च १९
शमयेदेकजापेन दुःस्वप्नं शमयेत्तथा
इति श्रीशाम्बपुराणे माहेश्वरस्तोत्रं षोडशोऽध्यायः १६

## सप्तदशोऽध्यायः

नारद उवाच
अतो व्योम प्रवक्ष्यामि यत्रोत्पन्नं यथा च यत्

अण्डे हिरण्यगर्भस्य यदु त्वं गर्भ संज्ञितम् १
तत्रोत्पन्नमिदं व्योम कपाले च महामये
अथो त्वं कांचनमयं चतुरस्रोच्छ्रितो महान् २
उत्पन्नः स चतुःशृङ्गो मेरुर्दैवत संशयः
दिव्यपत्रा च पृथिवी मेरुस्तस्याश्च कर्णिका ३
युगान्तकोटि विन्यस्तं तत्र कृत्वा रथं रविः
सर्वैर्देवैः परिवृत्तस्तस्य याति प्रदक्षिणम् ४
तस्मिन् मेरौ त्रयस्त्रिंशत् वसन्ते याज्ञिकाः सुताः
रुद्रा एकादश ज्ञेया आदित्या द्वादशैव तु ५
तथैव वसवो ह्याष्टावश्विनौ चैव याज्ञिकौ
वसून् वदन्ति हि पितृन् रुद्रास्त्वेव पितामहान् ५
प्रपितामहांश्च आदित्यानश्विनौ चात्मनस्तनुम्
पितृन् भूयः प्रवक्ष्यामि ऋतुसंवत्सरार्तवान् ७
अतो यज्ञभुजामेषां पृथङ्ग नामानि मे शृणु
अजैकपादहिर्बुध्नस्त्वष्टा रुद्रश्च वीर्यवान् ८
हरश्चैवाथ शर्वश्च त्रयम्बकश्चापराजितः
वृषाकपिश्च शम्भुश्च कपर्दी रैवतस्तथा ९
ईश्वरा भवनस्यैते रुद्रा एकादश स्मृताः
आदित्यानां तु नामानि विष्णुः शक्रश्च वीर्यवान् १०
अर्यमा चैव धाता च भिन्नोऽथ वरुणस्तथा
विवस्वान् सविता चैव पूषा त्वष्टा तथैव च ११
अंशुर्भगश्चातितेजा आदित्या द्वादश स्मृताः
नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनावपि १२
धरो ध्रुवश्च सोमश्च आपश्चैवानिलो नलः
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः १३
विश्वे देवान् प्रवक्ष्यामि नामभिस्तान् निबोध मे

क्रतुर्दक्षः पशुः सत्यः कालः कामो धुरिस्तथा १४
पुरुस्तथोरवाश्चैव रोचमानश्च ते दश
वर्तमाना इमे देवा शृणु मन्वन्तरे भवान् १५
याम्याश्च तुषिताश्चैव तथैव वशवर्तिनः
सत्याश्च भूतरजसः साध्याश्च तदनन्तरम् १६
वसुमन्वन्तरेष्वेते देवा द्वादश द्वादश
परावतास्तथा त्वन्ये सह्याश्च तुषितैः सह १७
साध्यान् देवान् प्रवक्ष्यामि नाभभिस्तान् निबोध मे
मनो रुमन्ता प्राणश्च नरो नारायणस्तथा १८
वृत्तिः त्रयो ह्यजश्चैव हंसोधर्मश्च वीर्यवान्
विभुश्चापि प्रभुश्चैव साध्या द्वादश कीर्तिताः १९
एते यज्ञभुजो देवा नित्यं यज्ञे प्रतिष्ठिताः
अतीतान् वर्तमानांश्च पुनश्चैव निबोध मे २०
आदित्या मरुतो रुद्राः कश्यपस्यात्मजाः स्मृताः
विश्वे सवसवः साध्या विज्ञेया धर्मसूनवः २१
एवं धर्मसुतः सोमस्तृतीयो वसुरच्यते
धर्मोऽपि ब्रह्मणः पुत्रः पुराणे निश्चयो मतः २२
अथेन्द्रांश्च मनूंश्चैव नामभिस्तु निबोध मे
स्वायम्भुवो मनुः पूर्वं ततः स्वारोचिषः स्मृतः २३
अतभिस्तामसश्चैव रैवतश्चाक्षुषस्तथा
इत्येते षड् विक्रान्ताः सप्तमः साम्प्रतो मनुः २४
वैवस्वत इति ज्ञेयो भविष्याः सप्त चापरे
तेषामाद्योऽर्कसावर्णिर्ब्रह्मसावर्णिरेव च २५
तस्माच्च भवसावर्णिर्धर्मसावर्णिरित्यतः
पञ्चमो दक्षसावर्णिः सावर्णिः पञ्च कीर्तिताः २६
रौच्यो भौत्यश्च द्वावन्त्यावित्येते मनवः स्मृताः

इन्द्रस्तु विश्वविज्ञेयो विपश्चित्तदनन्तरम्  २७
अद्भुतस्त्रिदिवश्चैव दशमस्त्विन्द्र उच्यते
सुशान्तिश्च सुकीर्तिश्च ऋतुधामा दिवस्पतिः  २८
इतिभूता भविष्याश्च इन्द्रा ज्ञेयाश्चतुर्दश
काश्यपोऽत्रिर्वशिष्ठश्च भारद्वाजोऽथ गौतमः  २९
विश्वामित्रो जमदग्निश्च सप्तैते ऋषयः स्मृताः
अतः परं प्रवक्ष्यामि मरुतो भीमान् पितॄन् ग्रहान्  ३०
प्रवहोऽथावहश्चै उद्वहः संवहस्तथा
विवहो निवहश्चैव वरिवाहस्तथैव च  ३१
अन्तरिक्षचरा ह्येते पृथङ्मार्गविचारिणः
महेन्द्रेण प्रभिन्नाङ्गा मरुतः सप्त कीर्तिताः  ३२
सानावग्निः शुचिर्नामा वैद्युतः पावकः स्मृतः
निर्मग्नः परमोऽन्योऽग्निस्त्रयः प्रोक्ता इमेऽग्नयः  ३३
अग्नीनां पुत्रपौत्राश्च चत्वारिंशन्नवैव तु
मरुतामपि सर्वेषां विज्ञेयाः सप्तसप्तकाः  ३४
एवं सम्वत्सरो ह्यग्निः ऋतवस्तस्य यज्ञिरे
ऋतुपुत्रार्तवाः पञ्च इति सर्गः सनातनः  ३५
सम्वत्सरस्तु प्रथमो द्वितीयः परिवत्सरः
इद्वत्सरस्तृतीयस्तु चतुर्थस्त्वनुवत्सरः  ३६
पञ्चमो वत्सरस्तेषां तदेभिः पंचभिर्युगम्
तेषु सम्वत्सरो ह्यग्निः सूर्यस्तु परिवत्सरः  ३७
सोम इद्वत्सरस्तेषां वायुश्चैवानुवत्सरः
रुद्रस्तु वत्सरा ज्ञेयाः पञ्चाद्वायोर्युगात्मकाः  ३८
आर्तवाः पितरो ज्ञेया ये जाता ऋतुसूनवः
पितामहास्तु ऋतवो मासा वै सोमसूनवः  ३९
प्रपितामहाश्च ऋतवः पञ्चाद्ये ब्रह्मणः सुताः

सौम्या बर्हिषदश्चैव अग्निष्वाताश्च ते त्रिधा ४०
आदित्यश्चैव सोमश्च लोहिताङ्गो बुधस्तथा
वृहस्पतिश्च शुक्रश्च तथा चैव शनैश्चरः ४१
राहुश्च धूम्रकतुश्च इत्येते वै नवग्रहाः
त्रैलोक्यस्य त्विमे नित्यं भावाभाव निवेदकाः ४२
आदित्यश्चैव सोमश्च स्मृतौ द्वौ मण्डलग्रहौ
राहुश्छाया ग्रहश्चैव शेषाः तारा ग्रहाः स्मृताः ४३
नक्षत्राधिपतिः सोमो ग्रहराजो दिवाकरः
आपद्यते रश्मिभिस्तमादित्यश्चन्द्रमाः स्मृतः ४४
आदित्यः प्रोच्यते ब्रह्मा विष्णुस्तेषां तु चन्द्रमाः
माहेश्वरस्तु विज्ञेयस्तृतीयो ङ्गारवग्रहः ४५
कश्यपस्य सुतः सूर्यः सोमोऽथर्बसुतः स्मृतः
देवासुरः गुरुः द्वौ तु भानुमन्तौ महाग्रहौ ४६
प्रजापति सुतावेतावुभौ शुक्र वृहस्पती
बुधः सोमात्मजः श्रीमान् सूर्यपुत्रः शनैश्चरः ४७
सैंहिकेयः स्मृतो राहुः केतुश्च ब्रह्मणः सुतः
सर्वेषां तु ग्रहाणां वै ह्यधस्ताच्चरते रविः ४८
रवेरुर्ध्वं स्थितः सोमः सोमान्नक्षत्रमण्डलम्
नक्षत्रेभ्यो बुधस्तूर्ध्वं बुधोद्धर्वं तु भार्गवः ४९
तस्मादङ्गारकश्चोर्ध्वं तस्य चोर्ध्वं बृहस्पतिः
तस्माच्छनैश्चरश्चोर्ध्वं तस्योर्ध्वमृषिमण्डलम् ५०
ऋषिभ्यश्च ध्रुवश्चोर्ध्वं मासोक्तं त्रिविधं ध्रुवे
आदित्यनिलयो राहुः कदाचित् सोममार्गगः ५१
सूर्यमण्डलसंस्थस्तु केतुर्नित्यं प्रसर्पति
नवयोजनसाहस्रो विस्तारोभास्करस्य तु ५२
विस्तारस्त्रिगुणं चास्य परिणाहेन मण्डलम्

द्विगुणं सूर्यविस्ताराद्विस्तारः शशिनः स्मृतः ५३
त्रिगुणं मण्डलं चास्य यथैव सवितुस्तथा
चन्द्रतः शोडशो भागो भार्गवस्य विधीयते ५४
भार्गवात् पादहीनो वै विज्ञेयस्तु बृहस्पतिः
बृहस्पतेः पादहीनौ कुजसौरावुदाहृतौ ५५
विस्तारमण्डलाभ्यां च पादहीनस्तयोर्बुधः
बुध तुल्यानि ऋक्षाणि सर्वह्रस्वानि यानि तु ५६
योजनार्धप्रमाणानि तेभ्यो ह्रस्वं न विद्यते
राहुः सूर्यप्रमाणस्तु कदाचित्सोमसंमितः ४७
तस्माद् ग्रहप्रमाणस्तु केतुस्त्वनियतः स्मृतः
भूलोकोऽथ भुवर्लोकस्स्वर्लोकस्तदनन्तरम् ५८
महर्जनस्तपः सत्यं सप्त लोकाः प्रकीर्तिताः
भूरयं पार्थिवो लोको ऋन्तरिक्षं भुवः स्मृतः ५९
दिव्यं लोको दिवो ह्येतदेतदूर्ध्व यथाक्रमम्
भूतस्यधिपतिश्चाग्निस्ततो भूतपतिः स्मृतः ६०
नभसोऽधिपतिर्वायुस्तेन वायुर्नभस्पतिः
दिवस्तु सूर्योऽधिपतिस्तेन सूर्यो दिवस्पतिः ६१
गन्धर्वाप्सरसश्चैव गुह्यकाः सह राक्षसैः
भूलोकवासिनः सर्वेऽन्तरिक्षचरान्छृणु ६२
मरूतः सप्तभिस्त्वन्यैः रुद्रास्तत्रैव चाश्विनौ
ऋादित्या वसवः सर्वे तत्रैव च गवां गणाः ६३
चतुर्थे च महर्लोको तिष्ठन्त्याकल्पवासिनः
प्रजानां पतिभिः सर्वैः सेव्यते पञ्चमो जनः ६४
मनुः सनत्कुमाराद्या वैराजास्तत्र ऋाश्रयाः
सत्यस्तु सप्तमो लोको ह्यपुनर्मार्ग गामिनाम् ६५
ब्रह्मलोकः समाख्यातो ह्यप्रतीघातलक्षणः

महीतलात् सहस्राणां शतादूर्ध्वं दिवाकरः ६६
दश तानि ध्रुवं यावद्द्विगुणाद्द्विगुणोत्तरे
दश योजन कोटयस्तु भूमेरूर्ध्वं ध्रुवः स्मृतः ६७
त्रयोविंशति लक्षाणि त्रैलोक्योत्सेध उच्यते
द्विगुणेषु सहस्रेषु योजनानां शतेषु च ६८
लोकान्तरमथैकैकं ध्रुवादूर्ध्वं विधीयते
देवदानवगन्धर्वयक्षराक्षसपन्नगाः ६९
भूता विद्याराश्चैव अष्टौ ते देवयोनयः
तस्मिन् व्योमि त्वमी लोकाः सप्तैव सम्प्रतिष्ठिताः ७०
अतो वै पितरो ज्ञेयास्तस्मिन्नेवाग्नयो ग्रहाः
ये चाप्येते समाख्याता मयाष्टौ देवयोनयः ७१
मूर्तयो मूर्तयश्चैव सर्वे ते व्योम्नयवस्थिताः
एवंविधमिदं व्योम सर्वदेवमयं स्मृतम् ७२
सर्वभूतमयं चैव सर्वश्रुतिमयं तथा
तस्माद् योऽर्चयते व्योम तेन सर्वेऽर्चिताः सुराः ७३
तस्मात्सर्वप्रयत्नेन शुभार्थं व्योम पूज्यते
इति श्रीशाम्बपुराणे देवतोपाख्यानं नाम सप्तदशोऽध्यायः १७

## अष्टादशोऽध्यायः

नारद उवाच
आकाशं स्वर्वियद्व्योम अन्तरीक्षं नभोऽम्वरम्
पुष्करं गगनञ्चैव मेरुस्तत्रैव कीर्तितः १
मेरुश्च पृथिवी मध्ये समन्तात्तस्य मेदिनी
भूमेर्द्वीप विभागन्तु प्रवक्ष्यामि समासतः २
जम्बूशाककुशद्वीपक्रौञ्चाः गोमेदकानि तु
शाल्मली पुष्कराख्यानि सप्त द्वीपा विभागशः ३

लवणंक्षीरदध्यम्बुघृतमिक्षुरसोदकाः
स्वादूकाश्च सप्तैते समुद्राः परिकीर्तिताः ४
हिमवान् हेमकूटश्च निषधोऽनिल एव च
श्वेतश्च शृंगवांश्चैव षडेते वर्षपर्वताः ५
मानसः सप्तमस्तेषां पुर्योऽष्टौ यत्र संस्थिताः
माहेन्द्री चात्यथाग्नेयी याम्या च नैऋृती तथा ६
वारुणी चाथ वायव्या सौम्येशानी तथैव च
मानसा निर्जला भूमिर्लोकालोकस्तथा गिरिः ७
ततस्त्वण्डकपालन्तु तस्माच्च परतस्तमः
ततोऽग्निवायुराकाशं ततो भूतादिरुच्यते ८
ततो महान् प्रधानं च प्रकृतिः पुरुषस्तथा
पुरुषादाश्वरो ज्ञेय ईश्वरेणावृतं जगत् ९
ऊर्ध्वमध्यमश्चैते प्राज्ञया ये प्रकीर्तिताः
पुनस्तान् सम्प्रवक्ष्यामि अण्डावरणकारणात् १०
भूलोकश्च भुवश्चैव तृतीयः स्वः प्रकीर्तितः
महर्जनः तपः सत्यं सप्त लोकाः प्रकीर्तितः ११
ततस्त्वण्डकपालन्तु तस्माच्च परतस्तमः
ततोऽग्निवायुराकाशं ततो भूतादिरुच्यते १२
ततो महान् प्रधानञ्च प्रकृतिः पुरुषस्तथा
पुरुषादीश्वरो ज्ञेय ईश्वरेणावृतं जगत् १३
भूमेरधस्तात् सप्तैव लोकास्तान्नामभिः शृणु
तलः सुतलपातालस्तमस्तालः ततः परः १४
सुशालश्च विशलश्च सप्ततमश्च रसातलः
ततस्त्वण्डकपालन्तु तस्माच्च परतस्तमः १५
एवं मेरोः समन्तात्तु सर्वमेतत् प्रकीर्तितम्
उत्पन्नः स चतुः शृङ्गः सुमेरुः शुद्धकाञ्चनः १६

पृथिव्याः संस्थितो मध्ये सिद्धगन्धर्वसेवितः
चतुर्भिः काञ्चनैः शृङ्गैर्दिव्यैर्दिवमिवोल्लिखत् १७
योजनानां सहस्राणि चतुराशीतिसमुच्छ्रितः
प्रविष्टः षोडशाधस्तादष्टाविंशतिविस्तृतः १८
विस्तारस्त्रिगुणश्चास्य परिणाहः समन्ततः
तस्य सौमनसं नाम शृङ्गमेकन्तु काञ्चनम् १९
द्वितीयं पद्मरागाभं ज्योतिष्कं नाम नामतः
तृतीयं नामतशचित्रं सर्वधातुमयं शुभम् २०
चतुर्थं राजतं शुक्लं चन्द्रभासमिति स्मृतम्
तस्य सौमनसं यत्तच्छृङ्गं जाम्बूनदं श्रुतम् २१
तदेव चोदयं नाम्ना यत्रोद्यन् दृश्यते रविः
उत्तरेण परिक्रम्य जम्बूद्वीपे दिवाकरः २२
दृश्यो भवति भूतानां शिखरं तत्समाहितः
काञ्चनस्य तु शृङ्गस्य तेजसार्कस्य चावृते २३
उभे सन्ध्ये प्रकाशेते आताम्रे पूर्वपश्चिमे
शृङ्गे सौमनसे सूर्ये तिष्ठत्युत्तरायणे २४
ज्योतिष्के दक्षिणे चापि विषुवे मध्यगस्तयोः
तस्येशानेऽभवत्सर्वः शृङ्गोऽग्निपूर्वदक्षिणे २५
नैरृत्ये पितरो ज्ञेया वायव्ये मरुतस्तथा
मध्ये नारायणः साक्षाद् ब्रह्मा ज्योतींषि चैव हि २६
आदित्यः स्वेन रूपेण तस्मिन् व्योम्नि प्रतिष्ठितः
इति श्रीशाम्बपुराणे व्योमोत्पत्तिनामाष्टादशोऽध्यायः १८

## ऊनविंशतितमोऽध्यायः

नारद उवाच
अथ हेममयस्यास्य मेरोः प्रतिदिशं स्थिताः

चतुर्णां लोकपालानां पुर्यस्ता नामभिः शृणु १
प्राच्यां दिशि सुमेरोस्तु महेन्द्रस्यामरावती
दक्षिणे च पुनर्मेरोर्यमस्य यमनी पुरी २
प्रतीच्यां च पुनर्मेरोर्वरुणस्य सुखापुरी
दिश्युत्तरस्यां मेरोस्तु सोमस्यापि विभावरी ३
मध्याह्ने मध्यरात्रन्तु उदयास्तमने तथा
कुर्वंश्चतुर्षु पार्श्वेषु तपत्येतासु भास्करः ४
मध्यगश्चामरावत्यां यदा भवति भास्करः
वैवस्वते संयमने उत्तिष्ठन् दृश्यते तदा ५
सुखायामर्धरात्रन्तु विभायामस्तमेति च
वैवस्वते संयमने मध्यगस्तु रविर्यदा ६
सुखायामथ वारुण्यामुत्तिष्ठन् दृश्यते तदा
विभायामर्धरात्रन्तु माहेन्द्र्यामस्तमेति च ७
सुखायान्चापि वारुण्यां मध्याह्ने चार्यमा यदा
विभायां सोमपुर्यां स उत्तिष्ठति विभावसुः ८
रात्र्यर्धन्वामरावत्यामस्तमेति यमस्य वै
सोमपुर्यां विभायान्तु मध्याह्ने चार्यमा यदा ९
माहेन्द्र्याममरावत्यामुत्तिष्ठति दिवाकरः
अर्धरात्रं संयमने वारुण्यामस्तमेति च १०
एवं चतुर्षु पार्श्वेषु मेरोः कुर्वन् प्रदक्षिणम्
उदयास्तमने चासावुत्तिष्ठति पुनः पुनः ११
पूर्वाह्ने चापराह्ने च द्वौ द्वौ देवालयौ तु सः
तपत्येकं च मध्याह्ने ताभिरेव गभस्तिभिः १२
उदितो वर्धमानाभिरामध्याह्नात्तपे रविः
ततः परं हसन्तीभिर्गोभिरस्तं नियच्छति १३
यत्रोद्यन् दृश्यते चैव स तेषामुदयः स्मृतः

अदृश्यं गच्छते यत्र तेषामस्तः स उच्यते १४
विदूरभावादर्कस्य भूमिलेखागतस्य च
लीयन्ते रश्मयो यस्मात्तेन रात्रौ न दृश्यते १५
तेषां यामास्थितः सूर्यो यत्र यत्र प्रदृश्यते
उर्ध्वं शतसहस्रन्तु योजनानां स दृश्यते १६
एवं पुष्करमध्यन्तु यदा भवति भास्करः
त्रिंशद् भागन्तु मेदिन्यां मुहूर्तेन स गच्छति १७
पूर्णं शतसहस्राणामेकत्रिंशत्तु साधिकम्
पञ्चाशच्च तथान्यानि सहस्राण्यधिकानि तु १८
मौहूर्तिकी गतिर्ह्येषा सूर्यस्य तु विधीयते
योजनां सहस्रे द्वे द्वे शते चैव योजने १९
निमेषान्तरमात्रेण दिवि सूर्यः प्रसर्पति
स शीघ्रमेव षर्येति भास्करोऽलातचक्रवत् २०
भ्रमन् वे भ्रममाणेषु ऋृक्षेषु विवरत्यसौ
इन्द्रः पूजयते सूर्यमुदयन्तं दिवे दिवे २१
मध्याह्ने धर्मराजस्तु अस्तं यान्तमपां पति
सोमस्तथार्धरात्रे तु कुवेरश्चैव सानुगः २२
ब्रह्मा विष्णुश्च रुद्रश्च पूजयन्ति निशाक्षये
एवमग्निर्निर्ऋृतिश्च वायुरीशान एव च
पूजयन्ति क्रमेणैव भ्रममाणं दिवाकरम् २३
इति श्री शाम्बपुराणे उनविंशतितमोऽध्यायः १९

## विंशतितमोऽध्यायः

नारद उवाच
अथ सूर्यरथस्यास्य सन्निवेशं निबोध मे
स्पन्दते चैकचक्रेण पञ्चारेण त्रिणेमिना १

हिरण्मयेन कान्तेन अष्टचमैंक नेमिना
चक्रेण भास्वता चैव दिवि सूर्यः प्रसर्पति २
नव योजनसाहस्रो विस्तारायाम उच्यते
द्विगुणोऽस्य स्थोपस्थादीषादण्डः प्रमाणतः ३
धुरस्यैव तु विस्तीर्णे अरुणो नाम सारथिः
स तस्य ब्रह्मणा सृष्टो रथः सम्वत्सरात्मकः ४
आसङ्गः काञ्चनो दिव्यो युक्तः परमगैर्हयैः
छन्दोभिर्वाजिरूपैश्च पतंश्चक्रं ततः स्थितैः ५
तेनासौ सर्पते व्योम्नि भास्वता तु दिवस्पतिः
अथ मारीच सूर्यस्य प्रत्यङ्गानि रथस्य तु ६
सम्वत्सरस्यावयवैः कल्पितानि यथाक्रमम्
नाभ्यस्तिस्रस्तु चक्रस्य त्रयः कालाः प्रकीर्तितः ७
आराः पञ्चार्तवास्तस्य नेमिः षड् ऋतवः स्मृताः
तथाद्वेविस्तृते तस्य आयने दक्षोत्तरे ८
मुहूर्ताश्च धुरास्तस्य सव्यास्तस्य कलाः स्मृताः
तस्य काष्ठाः स्मृता घोषा अक्षदण्डा क्षणास्तु वै ९
निमेषाश्चानुवक्षाश्च ईषाश्चास्य लवाः स्मृताः
रात्रिर्वरूथो धर्मश्च उर्ध्वं तस्य समुच्छिते १०
युगाक्षिकोटी तौ तस्य अर्थकामावुभौ स्मृतौ
अश्वरूपाणि छन्दांसि वहन्ते क्रमतो धुरम् ११
गायत्री चैव त्रिष्टुप् च जगत्यनुष्टुवेव च
पङ्क्तिश्च बृहती चैव उष्णिगेव च सप्तमी १२
चक्रमक्षाणि वर्धन्तु ध्रुवे चाक्षः समर्पितः
सहचक्रो भ्रमत्यक्षः स चाक्षो भ्रमति ध्रुवे १३
साक्षः सहैव चक्रेण भ्रमतेऽसौ ध्रुवेरितः
एवमर्थवशात्तस्य सन्निवेशो रथस्य तु १४

तथा संसर्पते व्योम्नि संसिद्धो भास्करो रथः
तेनासौ तु रविर्देवो नभः संसर्पते सदा १५
युगाक्षकोटी सम्बद्धे द्वे रश्मी स्यन्दनस्य तु
ते भ्रमेते ध्रुवासक्ते तच्चक्रं युगयोस्तु वै १६
भ्रमतो मण्डलान्यस्य खेचरस्य रथस्य तु
कुलालचक्रवद्याति मण्डलं सर्वतो दिशम् १७
रज्जुभ्यां प्रगृहीते ते चक्रे वै चेरतुर्ध्रुवे
ह्रसेते तस्य रश्मी ते मण्डले दक्षिणायने १८
उत्तरे तेऽथ वर्धेते पुना रश्मी युगे तु वै
तथैव बाह्यतः सूर्यो भ्रमते मण्डलानि तु १९
अशीतिमण्डलशतं काष्ठयोन्तरं तयोः
स रथोऽधिष्ठितो देवैरादित्यै ऋषिभिस्तथा २०
गन्धर्वैरप्सरोभिश्च सर्प ग्रामणिराक्षसैः
एते वसन्ति सूर्ये वै मासौ द्वौ द्वौ क्रमेण तु २१
धातार्यमा पुलस्त्यश्च पुलहश्च प्रजापतिः
उरगो वासुविश्चैव सावर्णी रश्मिरैवतः २२
तुम्बुरुर्नारदश्चैव गन्धर्वैर्गायतां वरौ
कृतस्थत्यप्सराश्चैव या च सा पुञ्जिकस्थला २३
ग्रामणी रथकृस्ना च रथौजाश्चैव तावुभौ
रक्षो हेतिः प्रहेतिश्च यातुधानौ स्मृतावुभौ २४
मधुमाधवयोरेष गणौ वसति भास्करे
वसतः ग्रैष्मिकौ मासौ नित्रश्च वरुणश्च ह २५
ऋषिरत्रिर्वशिष्ठश्च तक्षकोऽनन्त एव च
मेनका सहजान्या च गन्धर्वौ च ह हा हुहूः २६
रथे नागश्च ग्रामण्यौ रथचित्रश्च तावुभौ
पौरुषेयो वहश्चैव यातुधानौ च तावुभौ २७

शुचिशुक्रौ तु मासौ द्वौ सूर्ये एते वसन्ति वै
अथ सूर्ये पुनस्त्वन्या निवसन्तिस्म देवताः २८
इन्द्रश्चैव विवस्वांश्च अङ्गिरा भृगुरेव च
एलापत्रस्तथा सर्पः शङ्खपालश्च पन्नगः २९
विश्वावसुश्च गन्धर्वः प्रद्योतः सम्भ्रमश्च वः
प्रम्लोचन्त्यप्सराश्चैवानु म्लोचन्तीव ते शुभे ३०
यातुधानस्तथा सूर्यो व्याधश्चैव तु तावुभौ
एते नभो नभस्यौ च निवसन्ति दिवाकरे ३१
शरद्यन्याः पुनः शुभ्रा निवसन्तिस्म देवताः
पर्यन्यश्चैव पूषा च भारद्वाजः स गौतमः ३२
चित्रसेनश्च गन्धर्वस्तथा वसुरुचिश्च यः
विश्वाची च धृताची च उभे तु पुण्यलक्षणे ३३
नागस्त्वैरावतश्चैव विश्रुतश्च धनञ्जयः
सेनजिच्च सुषेणश्च सेनानी ग्रामीणीश्च तौ ३४
आपो वातश्च द्वावेतौ यातुधानौ प्रकीर्तितौ
वसन्त्येते तु वै सूर्ये इषोर्जौ कालपर्ययात् ३५
हैमन्तिकौ तु मासौ द्वौ वसन्ति तु दिवाकरे
अंशो भगश्च द्वावेतौ कश्यपश्च क्रतुश्च तौ ३६
भुजङ्गश्च महापद्मः सर्पः कर्कोटकस्तथा
चित्राङ्गश्चैव गन्धर्व उर्णायुश्चैव तावुभौ ३७
अप्सराः पूर्वचित्तिश्च गन्धर्वाश्चोर्वशी तथा
तार्क्ष्यश्चारिष्टनेमिश्च सेनानी ग्राभीणश्च तौ ३८
अवस्फूर्यश्च विद्युच्च यातुधानौ तु तौ स्मृतौ
सहे चैव सहस्ये च वसन्त्येते दिवाकरे ३९
ततः शैशिरयश्चापि मासयोर्निवसन्ति ते
त्वष्टा विष्णुर्यमोऽग्निश्च विश्वामित्रस्तथैव च ४०

काश्यपौ च तथा नागौ कम्बलाश्वतरावुभौ
गन्धर्वो धृतराष्ट्रश्च सूर्यवर्चाश्च तावुभौ ४१
तिलोत्तमा च रम्भा च शुभे चाप्सरसाम्बरे
ग्रामणी ऋतुजिच्चैव सत्याजिच्च महायशाः ४२
ब्रह्मप्रेतश्च रक्षो वै यक्षप्रेतश्च तावुभौ
इत्येते निवसन्तिस्म द्वौ द्वौ मासौ दिवाकरे ४२
स्थानाभिमाना ह्येते वै गणा द्वादशसप्तकाः
सूर्यमप्यापयन्ते ते तेजसा तेज उत्तमम् ४३
ग्रथितैः स्वैर्वचोभिश्च स्तुवन्ति ऋषयो रविम्
गन्धर्वाप्सरश्चैव गीतनृत्यैरुपासते ४४
विद्युद् ग्रामणिनो यक्षाः कुर्वन्तिस्म प्रदक्षिणम्
सर्पाः वहन्ति सूर्यं च यातुधाना तु यन्ति च ४५
वालखिल्या नयन्त्यस्तं परिवार्योदयाद्रविम्
एतेषामेव देवानां यथावीर्यं स्वथा तपः ४६
यथा यागं यथातत्वं यथासत्वं यथावलम्
तथा तपत्यसौ सूर्यस्तेषामिन्द्रस्तु तेजसा ४७
एते तपन्ति वर्षन्ति वान्ति भान्ति सृजन्ति च
भूतानामशुभं कर्म व्यपोहन्ति च कीर्तिताः ४८
एते सहैव सूर्येण भ्रमन्ते सानुगा दिवि
तपन्तश्च जपन्तश्च ह्लादयन्तश्च वै प्रजाः ४९
गोपायन्तिस्म भूतानि सर्वाणीहानुकम्पया
स्थानाभिमानिनामेत्स्थानं मन्वन्तरेषु वै
अतीतानागताश्चैव वर्तन्ते साम्प्रतं च ये ५०
ग्रीष्मे हिमे च वर्षासु विमुञ्चमानो
धर्महितं च वर्षं च दिवानिंशं च ।
गच्छत्यसावृतुवशात् परिवर्त्य रश्मीन्

देवान् पितॄंश्च मनुजांश्च स तर्पयन् वै ५१
प्रणाति देवानमृतेन सूर्यः सोमं सुषुम्नेण विवर्धयित्वा
शुक्ले तु पूर्णे दिवसक्रमेण तं कृष्णायन्तो विवुधाः पिबन्ति ५२
पीतं तु सोमं हि कलावशिष्टं कृष्णे च पक्षे तु रुचिक्षरन्तम्
स्वधामृतं तं पितरः पिबन्ति सर्पाश्च सौम्याश्च तथैव साध्याः ५३
सूर्येण गोभिस्तु समुद्धृताभिरद्भिः पुनश्चैव समुज्झिताभिः
वृष्ट्याभिवृद्धाभिरथौषधीभिर्मर्त्याः सुधामन्नरसैर्जयन्ति ५४
सामार्धतृप्तिस्त्वमृतात्सुराणां मासं च तृप्तिः स्वधया पितृणाम्
अन्नेन शश्वच्च दधाति मर्त्यान् सूर्यः स्वयं तत्र विधाति गोभिः ५५
अयं हरिद्भिर्हरितैस्तुङ्गैर्हरद्भिरापो हरितैश्च रश्मिभिः
विसर्गकालेविसृजंश्च ताः पुनर्विभर्ति शश्ववत् सविता चराचरम् ५६
अहोरात्राद्रथेनासावेकचक्रेण वै भ्रमन्
सप्तद्वीप समुद्रां गां सप्तिभिः सप्तभिः सप्तभिर्द्रुतम् ५७
छन्दोभिर्वाजिरूपैस्तैर्यतश्चक्रं ततः स्थितैः
कामरूपैः सकृद्युक्तैर्वृहद्भिस्तैर्मनोजवैः ५८
हरितैरव्यथैः पिङ्गैरीश्वरैर्ब्रह्मवादिभिः
त्र्यशीतिमण्डलं प्रातरह्नोरर्धेन विभावसोः ५९
वहन्ति हरयश्चैव मण्डलं दिवसक्रमात्
कल्पादौ सम्प्रयुक्तास्ते वहन्त्याभूतसंप्लवम् ६०
आवृतो वाल्यखिल्यैस्तैर्भ्रमद्भी रात्र्यहानि तु
सेव्यते गीतनृत्यैश्च गन्धर्वैरप्सरोगणैः
ग्रथितैः स्वर्वचोभिश्च स्तूयमानो महर्षिभिः ६१
पतङ्गपतगैरश्वैर्भ्रममाणैर्दिवस्पतिः ६२
वीथ्याश्रयाणि चरति नक्षत्रानुगतः शशी
इति श्रीशाम्बपुराणे आदित्यरथवर्णनो नाम विंशतितमोऽध्यायः २०

## एकविंशतितमोऽध्यायः

शाम्ब उवाच
सूर्यलोके त्वया दृष्टः सूर्यसोमसमागमः
स कथं क्षीयते सोमः क्षीणश्चाप्यायते कथम् १
यतः सोमं पिबन्तिस्म कृष्णपक्षेऽमृताशिनः
देवताः पितरश्चैव तन्ममाचक्ष्व सुव्रत २
नारद उवाच
राका चानुगती चैव पौर्णमासी द्विधा स्मृता
सिनीवाली कुहूश्चैव अमावास्या द्विधैव तु ३
अमा नाम रवे रश्मिश्चन्द्रलोके प्रतिष्ठिता
तस्यां सोमो वसेद्यस्मादमावस्या ततः स्मृता ४
पूर्वोदिते कलाहीने पौर्णमास्यां निशाकरे
पूर्णिमानुमती ज्ञेया पश्चात् स्तमितभास्करा ५
यस्मात्तामनुमन्यन्ते पितरो दैवतैः सह
तस्मादनुमतिर्नाम पूर्णिमा प्रथमा स्मृता ६
यदा ह्यस्तमियात्सूर्यः पूर्णचन्द्रत्य चोदयः
युगपत्सा तु वै राका तदा भवति पूर्णिमा ७
राकान्तामनुमन्यन्ते देवताः पितृभिः सह
रक्षणञ्चैव सूर्यस्य राकेति कवयोऽब्रुवन् ८
सिनीवाली प्रमाणन्तु क्षीणशेषो निशाकरः
अमावास्यां विशत्यर्कं सिनीवाली ततः स्मृता ९
कुहेति कोकिलस्योक्तिर्यातं कालं समाप्यते
तत्कालतुल्या वेषा वे अमावास्या कुहूः स्मृता १०
अनुमत्यां सराकायां सिनीवात्यां कुहूँ विना
एतासां युगलः कालः कुहूमात्रं कुहूः स्मृता ११
कलाः षोडश सोमस्य शुक्ले वर्धयते रविः

अमृतानामतः कृष्णे पीयन्ते दैवतैः क्रमात्  १२
प्रथमां पिवते वह्निर्द्वितीयां तु रविः कलाम्
विश्वेदेवास्तृतीयान्तु चतुर्थीं तु प्रजापतिः  १३
पञ्चमीं वरुणश्चापि षष्ठीं पिवति वास्रवः
सप्तमीमृषयो दिव्या वसवोऽष्टौ तथाष्टमीम्  १४
नवमीं कृष्णपक्षस्य पिवतीन्दोः कलां यमः
दशमीं मरुतश्चापि रुद्रा एकादशीं कलाम्  १५
द्वादशीं तु कलां विष्णुर्धनदश्च त्रयोदशीम्
चतुर्दशीं पशुपतिः कलां पिवति नित्यशः  १६
ततः पञ्चदशीं चापि पिवन्ति पितरः कलाम्
कलावशिष्टो निष्पीतः प्रविष्टः सूर्यमण्डलम्  १७
अमायां विशते यस्मादमावास्या ततः स्मृता
पूर्वाह्णे प्रविशत्यर्कं मध्याह्ने च वनस्पतिम्  १८
अपराह्णे विशत्यप्सु स्वां योनिं वारिसम्भवः
वनस्पतिगते सोमे यश्छिनत्ति वनस्पतिम्  १९
पातयेदपि वा पर्णं युज्यते ब्रह्महत्यया
अपः प्रविश्य सोमस्तु शेषया कलयैकया  २०
तृण गुल्मलतावृक्षान्निष्पावयति चौषधीम्
तमोषधिगतं गावश्चरन्त्यापः पिवन्ति वै  २१
तदङ्गानुगतं गोभ्यो क्षीरत्वमुपच्छति
तत्क्षीरममृतं भूत्वा मन्त्रपूतं द्विजातिभिः  २२
स्वाहाकार वषट्कारैर्हुताश्चाहुतयः क्रमात्
हुतमग्निषु देवार्थे पुनः सोमं विवर्धयेत्  २३
एवं संक्षीयते सोमः क्षीणश्चाप्यायते पुनः
तस्मात् सूर्यः शशाङ्कस्य वृद्धिकर्त्ता स्वरश्मिभिः  २४
एवं सम्पूर्यते देवैः परमात्मा महद्युतिः

गत्वा मित्रवनं शाम्ब त्वमाराधय भास्करम्  २५
नहि पापकृतः शाम्ब भक्तिर्भवति भास्करे
तस्मात्वं परया भक्त्या प्रपद्यस्व दिवाकरम्  २६
इति श्रीशाम्बपुराणे सोमवृद्धिक्षयो नामैकविंशतितमोऽध्यायः  २१

## द्वाविंशोऽध्यायः

सूर्यलोकस्त्वया दृष्टः सूर्यसोमसमागमः
स कथं क्षीयते सोमः क्षीणश्चाप्यायते कथम्  १
यथा सोमं पिवन्तिस्म कृष्णपक्षेऽमृताशनः
देवताः पितरश्चैव तन्ममाचक्ष्व सुव्रत  २
नारद उवाच
एका चानुमतिश्चैव पौर्णमासी द्विधा स्मृता
सिनीवाली कुहूश्चैव अमावस्या द्विधैव तु  ३
अमा नाम रवेस्तस्मिंश्चन्द्रलोके प्रतिष्ठिता
तस्यां सोमो वसेत्तस्मावस्या ततः स्मृता  ४
पूर्वोदिते कलाहीने पौर्णमास्यां निशाकरे
पूर्णिमानुमति ज्ञेया पश्चाद्गच्छति भास्करः  ५
यस्मात्तामनुमन्यन्ते पितरो दैवतैः सहः
तस्मादनुमतिर्नाम पूर्णिमा प्रथमा स्मृता  ६
यदास्तमियात्सूर्यः पूर्णचन्द्रस्य चोद्गमः
युगपत्सा तु वै राका तदा भवति पूर्णिमा  ७
राकान्तामनुमन्यन्ते देवता पितृभिः सह
रक्षणाच्चैव सूर्यस्य राकेति कवयोऽब्रुवन्  ८
सिनीवाली प्रमाणं तु क्षीणशेषो निशाकरः
अमावस्यां विशत्यर्कः सिनीवाली ततः स्मृता  ९
कूहेतिकोकिलास्योक्तिर्यावत्कालं समाप्यते

तत्कालतुल्या चैषा वै ह्यमावस्या कुहूः स्मृता  १०
अनुमत्यां सराकायां सिनीवाल्यां कुहूंविना
एतासां पुरतः कालः कुहूमालं कुहूः स्मृता  ११
कलाः षोडश सोमस्य शुक्ले वर्द्धयते रविः
अमृता नामतः कृष्णे दैवतैः पीयते क्रमात्  १२
प्रयमां पिवते वह्निर्द्वितीया तु रविः कलाम्
विश्वेदेवास्तृतीयां तु चतुर्थीं तु प्रजापतिः  १३
पञ्चमीं वरुणश्चापि षष्ठीं पिवति वासवः
सप्तमी मृषयो दिव्या वसवोऽष्टौ तथाष्टमीम्  १४
नवमीं कृष्णपक्षस्य पिवतीन्दोः कलां यमः
दशमीं मरुतश्चापि रुद्रा एकादशीं कलाम्  १५
द्वादशीं तु कलां विष्णुर्धनदश्च त्रयोदशीम्
चतुर्दशीं च पशुपतिः कलां पिवति नित्यशः  १६
ततः पञ्चदशीं चापि पिवन्ति पितरः कलाम्
कलावशिष्टो निष्णीतः प्रविष्टः सूर्यमण्डलम्
अमायां विशते तस्मादमावस्या ततः स्मृता  १७
पूर्वाह्ने प्रविशत्यर्कं मध्याह्ने च वनस्पतिम्
अपराह्णे विशत्यप्सु स्वयोनिं वारिसम्भवः  १८
वनस्पतिगते सोमे यश्छिन्नत्ति वनस्पतिम्
पातयेदपि वापन्ने युज्यते ब्रह्महत्यया  १९
अयः प्रविश्य सोमसतु शेषया कलयैकया
तृणगुल्भलतावृक्षान् निष्पादयतिचौषधीः  २०
तमोषधिगतं गावश्चरन्त्यापः पिवन्ति वै
तदङ्गानुगतं गोभ्यः क्षीरत्वमुपगच्छति  २१
तत् क्षीरममृतं भूत्वा मन्त्रपूतं द्विजातिभिः
स्वाहाकारवषट्कारैर्हुताश्चाहुतयः क्रमात्  २२

हुतमग्निषु देवार्थे पुनः सोमं विवर्द्धयेत्
एवं संक्षीयते कृष्णे क्षीणश्चाप्यायते पुनः २३
तस्मात् सूर्यः शशाङ्कस्य वृद्धिकर्ता स्वरश्मिभिः
एवं सं पूज्यते देवैः परमात्मा महाद्युतिः २४
गत्वा मिलवनं साम्ब त्वमाराधयभास्करम्
नहि पापकृतः साम्ब भक्तिर्भवति भास्करे
तस्मात्त्वं परया भक्त्या प्रपद्यस्व दिवाकरम् २५
इति शाम्बपुराणे सोमवृद्धिक्षयोनामद्वाविंशोऽध्यायः २२

## त्रयोविंशतितमोऽध्यायः

शाम्ब उवाच
सूर्यलोके त्वया विप्र गतेन ऋृषिसत्तम
आश्चर्याणि विचित्राणि दृष्टानि सुवहूनि वै १
जन्म विस्मय कर्तृणिदुर्विज्ञेयानि मानुषैः
तदिदं मम सन्देहं चिरकालस्थितं हृदि २
यदि श्राव्यमिदं वापि मन्यसे कथयस्व मे
सूर्यस्य ग्रहणं दृष्ट्वा ममासीद्व्याकुलं मनः ३
राहुश्चतमसो राशिस्तेजो राशिर्दिवाकरः
स कथं ग्रस्यते तेन भानुः स्वर्भानुना मुने ४
यस्य तेजोभिरखिलैः प्रकाशं क्रियते जगत्
तदत्र परमार्थोऽयं तं समारव्यातुमर्हसि ५
नारद उवाच
अविज्ञेयमनालक्ष्यं ज्ञानगम्यं महात्मनाम्
व्योम्निर्ग्रहणसंयोगं कथ्यमानं निबोध मे ६
राहुणा ग्रस्यते नार्को व्येतु ते हृदयव्यथा
कस्य शकितर्गृहीतुं वै तेजोराशिं दिवाकरम् ७

सर्वस्थोऽयमसंग्राह्यो ह्यबुधस्य जनस्य तु
इदं त्वदर्शनं सांब शृणु यत्ते वदास्यहम् ८
यज्ज्ञात्वा तु महाज्ञानं न करिष्यति संशयम्
यदि सत्यमयं ग्रस्तस्तेजोराशिर्दिवाकरः
तत्कथं स्वोदरस्थेन राहुर्भस्मीकृतः क्षणात्
अथापि राहुणाक्रम्य भानुर्वक्रप्रवेशितः १०
तत्कथं दर्शनैस्तीक्ष्णैः शतधा न विखण्डितः
निर्मुक्तस्तु पुनर्दृष्टस्तथैवाखण्डमण्डलः ११
नवास्यापहृतं तेजो न स्थानादवरोपितः
यदि चाप्येष निष्पीतः कथं दीप्ततरो भवेत् १२
तस्मान्न तेजसोराशीराहुर्वक्रं गमिष्यति
भक्षार्थं सर्वभूतानां सोमः सृष्टः स्वयंभुवा १३
तत्रस्थममृतं चापि संभृतं सूर्यतेजसा
पिबन्त्यम्बुमतं देवाः पितरश्च स्वधामयम् १४
त्रयस्त्रिंशत्त्रयश्चैव त्रयस्त्रिंशत्तथैव च
त्रयस्त्रिंशत्सहस्राश्च देवाः सोमं पिबन्ति ते १५
राहोर्यदामृताद्भागः पुरासृष्टः स्वयंभुवा
तस्मात्तंराहुरभ्येत्य पातुमिच्छति पर्वसु १६
उद्धृत्य पार्थिवीं छायामल्लाकारस्तमोमयः
पातुमिच्छंस्ततश्चन्द्रमाच्छादयति छायया १७
शुक्ले स चन्द्रमभ्येति कृष्णे पर्वणि भास्करम्
सूर्यमंडलसंस्थं तु चन्द्रमेव जिधांसति १८
तस्मात्पिबति तं राहुस्तनुमस्य विनाश्यन्
अविहिंसन् यथापद्मं पिबते भ्रमरो मधु १९
चन्द्रस्य वामृतं तद्वदभेदाद्राहुरश्नुते
चन्द्रकान्तोमणिर्यद्वद्धीनं क्षरति तत्क्षणात् २०

तुषारोऽपि न हीयेत तेजसा नैव मुच्यते
यथासूर्य्यमणिश्चापि सूर्यादुत्पाद्य पावकम् २१
न भवत्यंगहीनो वै तेजसा नैव मुच्यते
एवं चन्द्रश्च सूर्य्यश्च छादितावपि रागुणा २२
तेजसा न विमुच्येते नांगहीनौ बभूवतुः
पर्वणयस्य तु चन्द्रस्य माणिक्यफलसात्कृतिः २३
सोमो दैवतसंयोगाच्छायायोगाच्च पार्थिवात्
राहोश्च वरदानाद्वै प्रस्रवत्यमृतं शशी २४
स्वदोहकाले सम्प्राप्ते वत्सं दृष्ट्वा यथा च गौः
स्वाङ्गादिव क्षरेत्क्षीरं तथेन्दुः क्षरतेऽमृतम्
पितेव सूर्यो देवानां सोमो मातेव लक्ष्यते २५
मातुस्तनं यथा पीत्वा तृष्यन्ते सर्वजन्तवः
पीत्वामृतं तथा सोमौ तृप्यन्ते पितृदेवताः २६
संभृतं पर्वयोगेषु तथाऽयं क्षरते शशी
तं क्षरन्तं यथा भागमुपयुञ्जति देवताः २७
तस्मिन् काले समभ्येत्य राहुरप्यपकर्षति
सर्वमर्द्धं त्रिभागं वा पादं पादार्द्धमेव वा २८
आक्रम्य पार्थिवीं छायां यावतीं चन्द्रमण्डलम्
स्मृतः सभागो राहोस्तु देवभागश्च शेषकः २९
तृप्तिं विधाय देवनां राहोः पर्वगतस्य च
चन्द्रो न क्षीणतां याति तेजसा नैव मुच्यते ३०
तिथिभागस्तु यावन्तं पुनरर्कप्रमाणतः
एवं छायास्थिते काले भगवानेव कीर्त्तितः ३१
अधो राहुः परः सोमः सोमादूर्ध्वं दिवाकरः
पर्वकाले स्थितिस्त्वेवं विपरीता गतौ पुनः ३२
अतश्छादयते राहुरभ्रवच्छशिभास्करौ

राहुरभ्रवसंस्थानं सोममाछाद्य तिष्ठति ३३
उद्धृत्य पार्थिवीं छायां धूमान्मेघ इवोत्थितः
चन्द्रस्य यद्रवस्पृष्टं राहुणात् भास्करस्य च ३४
अ्रदभ्रावखंडितं तस्य केवलं श्यामलीकृतम्
कर्दमेन यथा वस्त्रं शुष्लत्वमपहन्यते ३५
एकदेशं च सर्वं वा राहुणा चन्द्रमास्तथा
प्रक्षालितं तदेवेह पुनः शुक्लतरं भवेत् ३६
राहुमुक्तं भवेत्तद्वन्निर्मलं चन्द्रमंडलम्
राहुणाच्छादितावापि दृष्ट्वा चन्द्रदिवाकरौ ३७
विप्राः शान्तिपरा भूत्वा पुनराप्याययति वै
एवं च गृह्यते सूर्यः चन्द्रमास्तत्र गृह्यते ३८
अ्रबुधास्तत्र पश्यन्ति मनुष्या मांसचक्षुषः
जगत्संमोहनं चैव चहणं चन्द्रसूर्ययोः ३९
पुण्यं महापवित्रं तु स्नाने दाने तथा जपे
विदित्वा चास्य माहात्म्यं सर्वदेव समागमम्
ध्यात्वा श्रुत्वा पठित्वा च सर्वपापैः प्रमुच्यते ४०
इति श्री शाम्बपुराणे राहु ग्रहणविचारो नाम त्रयोविंशतितमोऽध्यायः

## चतुर्विंशतितमोऽध्यायः

वशिष्ठ उवाच
एवं सूर्यस्य माहात्म्यं वर्णितं हर्षवर्द्धनम्
प्रीतित्वमाप्तवानेवततः संश्रुत्य नारदात् १
विनयादुपसंगम्य देवस्य पुरतस्तदा
निपत्य दीनया वाचा साम्बः पितरमब्रवीत् २
शाम्ब उवाच
कश्मलेनाभिभूतोऽस्मि मलेनाङ्गावसेविना

वैद्यैर्नौषिधिभिर्वपि न शान्तिर्विद्यते मम ३
वनं यास्यामि गोविन्द अनुज्ञां दातुमर्हसि
शिवेन पुण्डरीकाक्ष ध्यायस्व पुरषोत्तम् ४
अनुज्ञातः स कृष्णेन सिन्धोरुत्तरकूलतः
ज्ञात्वा संतारयामास चन्द्रभागां महानदीम् ५
ततो मित्रवनं गत्वा तीर्थं त्रैलोक्य विश्रुतम्
उपवासकृशः साम्बः शुष्को धमनि सन्ततः ६
आराधनार्थं सूर्यस्य गुह्यं स्तोत्रमिदं जगौ
चतुर्भिः समितं वेदैः पुराणाशयबृंहितम् ७
यदेतन्मण्डलं शुक्लं दिव्यं ह्यजरमव्ययम्
युक्तं मनोजवैरश्वैर्हरितैर्ब्रह्मवादिभिः ८
आदिरेव हि भूतानामादित्य इति संज्ञितः
त्रलोक्यचक्षुरेषोऽत्र परमात्मा प्रजापतिः ९
य एष मण्डले ह्यस्मिन्पुरुषो दीप्यते महान्
एष विष्णुरचिन्त्यात्मा ब्रह्मा चैव प्रजापतिः १०
रुद्रो महेन्द्रो वरुणः आकाशः पृथिवी जलम्
वायुः शशाङ्क पर्जन्यो धनाध्यक्षस्तथैव च ११
य एष मण्डले ह्यस्मिन्नाग्निवर्चाः प्रकाशते
सहस्ररश्मिरेषोऽत्र द्वादशात्मा दिवाकरः १२
य एष मण्डले ह्यस्मिन्पुरुषो दीप्यते महान्
एष साक्षान्महादेवो वृत्तकुम्भनिभः शुभः १३
कालो ह्येष महायोगी संहारोत्पत्तिलक्षणः
य एष मण्डले ह्यस्मिंस्तेजोभिः पूरयन्महीम् १४
भ्रमते ह्यव्यवच्छिन्नो धातैषोऽमृतलक्षणः
नातः परतरो देवस्तेजसा विद्यते क्वचित् १५
पुष्णाति सर्वभूतानि ह्येष एव स्वधामृतैः

अन्तस्थो म्लेच्छजातीयांस्तिर्यग्योनिगतानपि १६
कारुण्यात् सर्वभूतानि पासि देव विभावसो
आपत्सु च विमोक्षार्थं त्वं भक्तानभिरक्षसि १७
चित्रकुष्ठान्धबधिरान्खंजान्पंगून्जडांस्तथा
प्रपन्नवत्सलो देवनिरुजः कुरुषे नरान् १८
दद्रुगण्डनिमग्नांश्च निर्व्रणान्पुरुषांस्तथा
प्रत्यक्षदर्शी त्वं देव समुद्धरसि लीलया १९
का मे शक्तिस्तव स्तोतुमार्त्तोऽहं रोगपिडितः
स्तूयसे त्वं सदा देव ब्रह्मविष्णुशिवादिभिः २०
महेन्द्रसिद्धगन्धर्वैरप्सरोभिः सगुह्यकैः
स्तुतिभिः किं पवित्रैर्वा तव देव समीरितैः २१
यस्य ते ऋग्यजुः साम्नां श्रितं यं मण्डलेस्थितम्
ध्यानिनां तु परं ध्यानं मोक्षद्वारं च मोक्षिणाम् २२
अनन्तं तेजसां तेजो ह्यचिंत्याव्यक्त निर्मलम्
यदप्यपाहृतं किंचित्स्तोत्रेऽस्मिन्जगतः पते २३
आर्त्तभक्तिं च विज्ञाय तत्सर्वं क्षन्तुमर्हसि
तुमुवाच नरः प्रीतः सूर्यो जांबवतीसुतम्
प्रीतोऽस्मि तपसा वत्स वरं ब्रूहि यमिच्छसि २४
शाम्ब उवाच
यदि प्रसन्नो भगवानेष एव वरो मम
भक्तिर्भवतु मे नित्यं त्वयि देवे सनातने २५
सूर्य उवाच
भूयस्तुष्टोऽस्मि भद्रं ते वरं वरय सुव्रत
स द्वितीयं वरं व्रवे तं देवं वरदं शुभम् २६
मलं शरीरस्थमिदं त्वत्प्रसादात्प्रणश्यतु
तथास्त्वित्युक्तमात्रोसौ भास्करेण महात्मना २७

तन्मुमोच मलं शाम्बो देहात्त्वचमिवोरगः
ततो लब्धवरः शाम्बो रूपवांश्चाभवत्पुनः २८
सूर्य उवाच
भूयश्च शृणु मे शाम्ब तुष्टोऽहं यद् ब्रवीमि ते
अद्य प्रभूति त्वन्नाम्ना मम स्थानानि सुव्रत २९
क्षितौ ये स्थापयिष्यन्ति तेषां लोकः सनातनः ३०
स्थापयस्व च मामास्मिंश्चन्द्रभागातटे शुभे
त्वत्समानमिदं चापि पुरं शाम्ब भविष्यति ३१
कीर्तिस्तवाक्षया लोके यावद् भूमिर्भविष्यति
भूयश्च ते प्रदास्यामि प्रत्यहं स्वप्नदर्शनम् ३२
एवं दत्वा वरं तस्मै वृष्णिसिंहाय भास्करः
प्रत्यक्षदर्शनं दत्वा तत्रैवान्तरधीयत ३३
यः पठेदिदं स्तोत्रं त्रिकालं भक्तिमान्नरः
नारी वा दुःखशोकार्त्ता मुच्यते शोकसागरात् ३४
चक्षुःपीडा मनःपीडा ग्रहपीडाभ्य एव च
बन्धने निगडे धोरे काष्ठागारगुहेषु या ३५
अधस्तादन्तरिक्षे वा क्षमते भक्तिवत्सलः
त्रिसप्तमावर्तैर्होमैस्त्वां सप्तरात्रिकम् ३६
राज्यकामो लभेद्राज्यं धनकामो लभेद्धनम्
रोगार्त्तो मुच्यते रोगाद्यथा शाम्बस्तथैव सः ३७
इति श्रीशाम्बपुराणे रोगापनयनो नाम चतुर्विंशतितमोऽध्यायः

पञ्चविंशतितमोऽध्यायः

वसिष्ठ उवाच
स्तुवंस्तत्र ततः साम्बः कृशो धमनि सन्ततः
राजन्नामसहस्रेण सहस्रांशुं दिवाकरम् १

खिद्यमानं तु तं दृष्ट्वा सूर्यः कृष्णात्मजं तदा
स्वप्ने तु दर्शनं दत्वा पुनर्वचनमब्रवीत् २
सूर्य उवाच
साम्ब साम्ब महाबाहो शृणु जाम्ववतीसुत
अलं नाम सहस्रेण पठस्वेमं स्तवं शुभम् ३
यानि नामानि गुह्यानि पवित्राणि शुभानि च
तानि ते कीर्त्तयिष्यामि श्रुत्वा वत्सावधारय ४
ॐ विकर्त्तनो विवस्वांश्च मार्त्तराडो भास्करो रविः
लोकप्रकाशकः श्रीमांल्लोकचक्षुर्ग्रहेश्वरः ५
लोकसाक्षी त्रिलोकेशः कर्त्ता हर्त्ता तमिस्रहा
तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः ६
गभस्तिहस्तो ब्रह्मा च सर्वदेवनमस्कृतः
एकविंशतिरित्येष स्तव इष्टः मदा मम ७
शरीरारोग्यदश्चैव धनवृद्धियशस्करः
स्तवराज इति ख्यातस्त्रिषु लोकेषु विश्रुतः ८
य एतेन महाबाहो द्वे सन्ध्ये स्तपनोदये
स्तौति मां प्रणतो भूत्वा सर्वपापैः प्रमुच्यते ९
कायिकं वाचिकं चापि मानसं यच्च दुष्कृतम्
तत्सर्वमेकजाप्येन प्रणश्यति ममाग्रतः १०
एष जाप्यश्च होमश्च संध्योपासनमेव च
वलिमंत्रोऽर्धमंत्रश्च धूपमंत्रस्तथैव ११
अन्नप्रदाने स्नाने च प्रणिपाते प्रदक्षिणे
पूजितोऽयं महामत्रः सर्वव्याधिहरः शुभः १२
एवमुक्त्वा तु भगवान्भास्करो जगदीश्वरः
आमंत्र्य कृष्णतनयं तत्रैवान्तरधीयत १३
साम्बोऽपि स्तवराजेन स्तुत्वा सप्ताश्ववाहनम्

पूतात्मा नीरुजः श्रीमांस्तस्माद्रोगाद्विमुक्तवान् १४
इति श्री शाम्बपुराणे रोगापनयने
श्री सूर्यवक्त्रविनिस्सृस्तिवराजवर्णनं नाम
पञ्चविंशतितमोऽध्यायः २५

षड्विंशतितमोऽध्यायः

अथ लब्धवरः साम्बः प्राप्तं रूपं पुरातनम्
मन्यमानस्तदाश्चर्यं प्रहृष्टेनान्तरात्मना १
पूर्वाभ्यासेन तेनैव सार्द्धमन्यैस्तपस्विभिः
स्नानार्थं नातिदूरस्थां चंद्रभागां नदीं ययौ २
स स्नात्वा सहसैवाथ पश्यतिस्म प्रभावतीम्
उह्यमानां जलौधेन प्रतिमामुन्मुखीं रवेः ३
स तामुत्तीर्य सलिलादानयित्वा स्वमाश्रमम्
तस्मिन्मित्रवनोद्देशे स्थापयित्वा विधानतः ४
ततस्तामेव पप्रच्छ प्रणम्य प्रतिमां रवेः
केनेयं निर्मिता नाथ भवत्या आकृतिः शुभा ५
प्रतिमा तमुवाचाथ शृणु साम्ब यतस्त्वियम्
निर्मिता येन चाप्येषा पुरुषेण मदाकृतिः ६
ममातितेजसा क्लिष्टं रूपमासीत्पुरातनम्
असह्यं सर्वभूतानां ततोऽहं प्रार्थितः सुरैः ७
सह्यं भवतु ते रूपं सर्वप्रणभृतामिह
ततो मया समादिष्टो विश्वकर्मा महातपाः ८
तेजसः शातनं कुर्वन् रूपं निर्वर्त्तयस्व मे
ततस्तु मत्समादेशात्तेनैव निपुणं तदा ९
शाकद्वीपे भ्रमिं कृत्वा रूपं निर्वर्तितं मम
प्रीत्या ते सांप्रतं चैव समपाकारितं पुनः १०

तेनेयं कल्पवृक्षात्तु निर्मिता प्रतिमा मम
कृत्वा हिमवतः पृष्ठे पुण्यसिद्धनिषेविते ११
त्वदर्थं चन्द्रभागायां ततस्तेनावतारिता
भवतस्तारणार्थं हि जातं स्थानमिदं मम १२
रूचिरं सर्वदा चात्र सान्निध्यं मे भविष्यति १३
सान्निध्यं मम पूर्वाह्णे उदितेरज्ञयते जनः
कालात्यये च मध्याह्ने सायाह्ने चात्र नित्यशः १४
वसिष्ठ उवाच
श्रुत्वा देवस्य तद्वाक्यं दृष्ट्वा प्रत्यक्षदर्शिनम्
कृत्वा देवगृहं साम्बस्ततः प्रोवाच नारदम् १५
साम्ब उवाच
त्वत्प्रसादान्मया प्राप्तं रूपमेतत्सनातनम्
प्रत्यक्षदर्शनं चापि भास्करस्य महात्मनः १६
सर्वमेतच्च संप्राप्य पुनश्चिन्ताकुलं मनः
देवस्य परिचर्यायाः पालनं कः करिष्यति १७
गुणयुक्तो द्विजो यो हि समर्थः परिपालने
ममैवानुग्रहाद् ब्रह्मन्विचिन्त्याख्यातुर्महसि १८
एवमुक्तस्तु साम्बेन नारदः प्रत्युवाच तम् १९
नारद उवाच
न द्विजाः परिगृह्णन्ति देवस्यात्मीकृतं धनम्
विद्यते च धनं ह्यत्र गुरुश्चायं प्रतिग्रहः २०
देवचर्या गतैर्द्रव्यैः क्रिया ब्राह्मी न विद्यते
अविज्ञाय च कुर्वन्ति ये क्रिया लोभमोहिताः २१
अपाङ्क्तेया भवन्तीह तेन देवलका द्विजाः
अविज्ञाय विधानं ये ब्राह्मणा लोभमोहिताः २२
देवस्वमुपमोद्व्यन्ति पतिता स्ते भवन्ति हि

गर्हितं मानवं शास्त्रं न प्रशंसन्ति ते द्विजाः २३
देवस्वं ब्राह्मणस्वं च यो लोभादुपजीवति
स पापात्मा परे लोके गृध्रोच्छिष्टेन जीवति २४
ततोऽन्यो ब्राह्मणः कश्चिद्देवचर्चां करिष्यति
विधिज्ञो ज्ञानवन्तं च परिचर्याक्षमं तथा
समाख्यास्यति ते देवस्तस्मात्तं शरणं ब्रज २५
नारदेनैव मुक्तस्तु तु प्रणम्य शिरसा रविम्
संशयं परिपप्रच्छ कस्ते पूजां करिष्यति २६
विज्ञप्ते त्वय्यशेषेण प्रतिमा तमुवाच ह
न योग्यः परिचर्य्यायां जम्बूद्वीपे ममानघ २७
मम पूजापरा कृत्वा शाकद्वीपादिहानय
लवणोदात् परे पारे क्षीरोदेन समाबृतम् २८
जम्बूद्वीपात्परं तस्माच्छाकद्वीप इति श्रुतः
तत्र पुण्या जनपदाश्चातुर्वर्ण्य समाश्रिताः २९
मगाश्चामगाश्चैव मानसा मन्दगास्तथा
मगा ब्राह्मणभूयिष्ठा मामगाः क्षत्रियास्तथाः ३०
वैश्यास्तुमानसाज्ञेयाः शूद्रास्तेषां तु मन्दगाः
न तेषां संकरः कश्चिद्वर्णाश्रमकृतः क्वचित् ३१
धर्मस्यात्यभिचारित्वादेकान्ते सुखिताः प्रजाः
तेजसश्चास्मदीयस्य निर्मिता वै पुरा मया ३२
तेभ्यो वेदाश्च चत्वारः सरहस्या मयेरिताः
वेदोक्तैर्विविधैः स्तोत्रैः परैः गुह्यैर्मया कृतैः ३३
मामेव ते च ध्यायन्ति मां जपन्ते च नित्यशः
मद्भावना ममपरा मदुक्ता मत्परायणाः ३४
मम शुश्रूषकाश्चैव ममैव व्रतचारिणः
अव्यङ्गधारिणः सर्वे विधिदृष्टेन कर्मणा ३५

कुर्वन्ति ते सदा तत्र मम पूजाम् मनोऽनुगाम्
तत्र देवाः सगन्धर्वाः सिद्धाश्च सहचारिणैः ३६
विहरन्ते रमन्ते च दृश्यमानाश्च तैः सह
श्वेतद्वीपे त्वहं विष्णुः कुशद्वीपे महेश्वरः २७
पुष्करे च स्मृतो ब्रह्मा शाकद्वीपे च भास्करः
तन्मगान्मम पूजार्थं शाकद्वीपादिहानय ३८
आरूढो गरुडं साम्ब शीघ्रं गच्छ विचारय ३९
वसिष्ठ उवाच
तथेति प्रतिगृह्याज्ञां रवेर्जाम्ववती सुतः
पुनर्द्वारवतीं गत्वा का त्यातीव समावृतः ४०
आख्यातवान् पितुः सर्वं स्वकीयं देवदर्शनम्
तस्माच्च गरुडं लब्ध्वा ययौ साम्बोऽधिरुह्य तम् ४१
शाकद्वीपमनुप्राप्य संप्रहृष्टतनूरुहः
तत्रापश्यद्यथोद्दिष्टान् साम्बस्तेजस्विनो मगान् ४२
विवस्वन्तं पूजयतो धूपगंधादिभिः शुभैः
अभिवाद्य तु तान्सर्वान् कृत्वा चैव प्रदक्षिणाम् ४३
पृष्ट्वा ह्यनामयं तेषां श्लाघयामास तांस्ततः
यूयं हि पुण्यकर्माणो द्रष्टव्याश्च शुभार्थिभिः ४४
यो रतोऽर्कस्य पूजायां तस्य चैव वरप्रदः
तनयं विद्धि मां विष्णोर्नाम्ना साम्ब इति श्रुतः ४५
चन्द्रभागातटे चापि मया सूर्यो निवेशितः
तेनाहं प्रेषितश्चात्र उत्तिष्ठध्वं व्रजामहे ४६
ते तमूचुस्ततः साम्बमेवमेतन्न संशयः
अस्माकमपि देवेन व्याख्यातं पूर्वमेव हि ४७
अत्रापशकुलानीह मगानां वेदवादिनाम्
यास्यन्ति च त्वया सार्द्धं यत्र संनिहितो रविः ४८

स तु गृह्य ततस्तानि दश चाष्टौ कुलानि च
आरोप्य गरुडे सांबस्त्वरितः पुनरभ्यगात् ४९
सपुत्रदारसंयुक्तो पूजा यज्ञाय चागतः
सऽल्पेनैव तु कालेन प्राप्तो मित्रवनं पुनः ५०
कृत्वा ज्ञात्वा रवेः सांबो यत्कृतं तन्नयवेदयत्
रविः शोभनमित्युत्वा प्रसन्नः सांबमब्रवीत् ५१
मम पूजाकरा ह्येते प्रजानां शान्तिकारकाः
मम पूजां विधानोक्तां करिष्यन्ति मनोऽनुगाम्
मत्कृते च पुनश्चिन्ता न ते काचिद्भविष्यति ५२
इति शाम्बपुराणे मगानयनं नाम षड्विंशतितमोऽध्यायः २६

सप्तविंशतितमोऽध्यायः

अहो सभाग्याः श्लाध्याश्च कृतपुण्याश्च ते सदा
पूजायां ये रताः सूर्यो येषां चैव वरप्रदः १
पर्याप्तं सर्वमेवैषामिह चामुत्र किं फलम्
अनित्ये सति मानुष्ये देवपूजारता हि ये २
किन्तुचिन्त यतः सूर्यं चिन्तयित्वा सुभोजकान्
ज्ञानं प्रति तथाचैषां हृदये मम संशयः ३
कथं पूजाकरा ह्येते किं मगाः किंच याजकाः
ज्ञानं च किं परं तेषां ज्ञेयस्तेषां क एव हि ४
एतत्सर्वं यथान्यायं तन्ममाख्यातुमर्हसि ५
वशिष्ठ उवाच
मोक्षवादिन एवैते कर्मयोगं समाश्रिताः
यष्टव्यो भगवान्सूर्यः फलपुष्पैर्मनोरमैः ६
तथैवान्नौषधीभिश्च आज्यहौमैस्तथैव च
होमं ये मंत्रतः कृत्वा परं होमं पिबन्ति ते ७

परं होमस्य पानाच्च पूतात्मानो ह्यकल्मषाः
विशन्ति परमां दिव्यां भास्करीं तैजसीं कलाम्  ८
कर्म्मणः साधने चैका तनुरग्नौ स्थिता तु या
वायुमार्गे स्थिता व्योम्नि द्वितीया च प्रकाशिका  ९
ततः परं तृतीयं तत्स्मृतं सूर्यस्य मण्डलम्
ऋङ्मयं मण्डलं तच्च दिव्यं ह्यमरमव्ययम्  १०
स तस्य पुरुषो मध्ये योऽसौ सदसदात्मकः
क्षराक्षरश्च विज्ञेयो महासूक्ष्मं तथैव च  ११
निष्फलः सकलश्चैव द्वैविध्यं तस्य कल्पितम्
द्रष्टव्यः सकलश्चैव सर्वभूतव्यवस्थितः  १२
तृणगुल्मलता वृक्षमृगसिंहगजद्विजान्
सुरद्विजमनुष्यांश्च स्थलजान्जलजांस्तथा  १३
व्याप्य स्थितं सर्वत्र सर्वेषामन्तरात्मनि
यदा कालात्मनश्चैव द्वितीयां तनुमाश्रितः  १४
निष्कलस्तु तदा ज्ञेयः संस्थितस्तैजसकीं कलाम्
हिमं धर्मं च वर्षं च त्रैकाल्यं कुरुते सदा  १५
तृतीयायां तनौ तस्य संरक्षंस्तत्परं पदम्
देवयानं च पन्थानं कर्मयोगेन संस्थितम्  १६
आदित्यसिद्धान्तविदः सांख्ययोगविदश्च ये
तेऽपि गच्छन्ति तत्स्थानं स मोक्षः प्रकीर्तितः  १७
निर्द्वन्द्वो निर्मलश्चैव तत्र गत्वा न शोचति
वेदेषु च वेदान्ते त्रयीधर्मस्तु संस्थितः  १८
गायत्र्याश्च चतुर्विंशत्यक्षरं परिकीर्तितम्
पंचविंशतितत्त्वस्थं ध्यायन्तस्तत्त्ववेदिनः  १९
ऊंकारस्थं ततश्चापि ध्यायन्ति वेदवादिनः
अक्षरं चैव ओंकारं सार्द्धमात्रद्वये स्थितम्  २०

वदन्ति चार्द्धमात्रस्थमकारं व्यञ्जनात्मकम्
ध्यायन्ति च मकारं ये ज्ञानं तेषां मदात्मकम् २१
मकारध्यानयोगाच्च मगा ह्येते प्रकीर्तिताः २२
धूपमाल्यर्जपैश्चापि ह्युपहारैस्तथैव च
ये यजन्ति सहस्रांशुं तेन ते याजकाः स्मृताः २३
इति श्रीशाम्बपुराणे सप्तविंशतितमोऽध्यायः २७

अष्टाविंशतितमोऽध्यायः

इमां ज्ञानोपलब्धिं च कथ्यमानां निबोध मे
अस्थिस्थूणस्नायु युतं मांसशोणितलेपनम् १
चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः
जराशोकसमाविष्टं रोगायतनमातुरम् २
रजस्वलमनित्यं च भूतावासमिमं त्यजेत्
कृपालुत्वं क्षमासत्यार्जवत्वमथ शौचता ३
क्षमता सर्वभूतेषु एतन्मुक्तस्य लक्षणम्
तिले तैलं दधि क्षीरे काष्ठे पावकसंहतिः ४
उपायं चिन्तयेदस्य धिया धीरस्समाहितः
प्रमार्थिनाचलेनापि मनसा संयतेन तु ५
बुद्धीन्द्रियापि संयम्य सकुन्तानिव पञ्जरे
इन्द्रियैर्नियतैर्देही धारणाभिश्च तृष्यति ६
प्राणायामैर्दहेद्दोषं धारणाभिश्च दुष्कृतम्
प्रप्याहारेण विषयान्ध्यानेनानीश्वरान् गुणान् ७
यथा पर्वतधातूनां दोषा दह्यन्ति धाम्यताम्
तथेन्द्रियकृता दोषा दह्यन्ते चित्तनिग्रहात् ८
चित्तं चित्तेन संशोध्य मनस्तु मनसैव तु
भावान्भावे च संशोध्य बुध्या बुद्धिं विशोधयेत् ९

चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम्
शुभाशुभविनिर्मुक्तो निर्द्वन्द्वो निष्परिग्रहः १०
निर्ममो निरहंकारस्ततो याति पराम् गतिम्
पूर्वाह्णे लोहितं रूपमृङ्मयं प्रथमं स्मृतम् ११
यजुर्मयं द्वितीयन्तु शुक्लं माध्याह्निकं स्मृतम् १२
कृष्णं तृतीयं सायाह्ने साम्नो रूपं ततः स्मृतम्
प्रथमं राजसं रूपं द्वितीयं सत्वसंज्ञितम् १३
तृतीयं तामसं रूपं त्रैगुण्यं तच्च संज्ञितम्
त्रयाणां व्यतिरेकेण चतुर्थं सूर्यमण्डलम् १४
ज्योतिः प्रकाशकं रूक्ष्मं प्रोक्तं तच्च निरञ्जनम्
त्रैविद्यसिद्धान्तरताः सूर्यसिद्धान्तवेदिनः १५
ऊंकारप्रणवैर्युक्ता ध्याननिर्धूतकल्मषाः
स्थिताः पद्मासने धीरा नाभिसंन्यस्तपाणयः १६
सुषुम्नानाभिमार्गं च कुम्भरेचकपूरकैः
त्रिभिः संशोध्य ता पंच महतो देहमध्यगान् १७
पदाङ्गुष्ठेन संचिंत्यमूर्ध्वमुन्नमय क्रमात्
नाभिप्रदेशे दृष्ट्वा च देवमग्निमनिन्धनम् १८
सोमं च हृदये दृष्ट्वा मूर्ध्नि चाग्निशिखां पुनः
वातरश्मिमिवासह्यं तं भित्वादित्यमण्डलम् १९
ततः परं तु गच्छेद योगस्थः सूर्यमण्डलम्
तत्र गत्वा न शोचन्ति तत्सौरं परमं पदम् २०
प्रथमं हृदयं स्थानं द्वितीयं चाग्निसंस्थितम्
तृतीयं तापनं स्वस्थं चतुर्थं सूर्यमण्डलम् २१
स्थानं चतुर्थं परमात्मनस्तनोर्भानोः सुरेशस्य वदन्ति तज्ज्ञाः
स्थानं द्वितीयं परमात्मनस्तनोर्भानोः सुरेशस्य वदन्ति तज्ज्ञाः २२
ज्ञेयश्च मोक्षश्च नृणां स एव संसारविच्छिन्न करं पदं तत्

इदं त्वृषीणां चरितं मया ते प्रख्यापितं याजकशास्त्रसंगात् २३
ज्ञात्वा तु यं मोक्षविदो भवन्ति सिद्धाश्च तत्स्थानमवाप्नुवन्ति २३
इदममृतसमं परस्य वेद्यं किरणसहस्र भृतो हितं जनानाम्
ऋषिचरितं वीक्ष्य तत्वसारं व्यपगतमोहधियः प्रयान्ति मोक्षम् २४
महत्प्रोक्तमिदं ज्ञानं देयं श्रद्धावतां नृणाम्
नास्तिकानामबुद्धीनां न देयं भूतिमिच्छता २५
इति श्रीशाम्बपुराणे मोक्षज्ञानं नामाष्टाविंशतितमोऽध्यायः २८

## एकोनत्रिंशत्तमोऽध्यायः

वशिष्ठ उवाच
अतः परं प्रवक्ष्यामि प्रतिमालक्षणं क्रमात्
यथैव नारदेनोक्तं सांबानुग्रहकारिणा १
न पुरा प्रतिमाह्यासी पूज्यते मण्डले रविः
यथैतन्मण्डलं व्योम्नि स्थीयते सवितुस्तदा २
एवमेव पुरा भक्तैः पूज्यते मण्डलाकृतिः
यतः प्रभृति चाप्येवं निर्मिता विश्वकर्मणा ३
सर्वलोकहितार्थाय सूर्यस्य पुरुषाकृतिः
प्रतिमास्थापनं चैव प्रमाणं च विधानतः ४
सर्वलोकहितं साम्ब कथ्ययानं निबोध मे
गृहेषु प्रतिमा यास्तु न तासां नियमः क्वचित् ५
मनसैवेप्सिताः कार्याः सर्वा एव शुभप्रदाः
देवायतनविन्यासे कार्यं मूर्तिपरीक्षणम् ६
भूमेश्च लक्षणं यत्नात्परीक्ष्यं तत्वतो बुधैः
आदौ भूमिं परीक्षेत कुर्याद्देवगृहं ततः ७
इष्टगन्धरसोपेता स्निग्धा भूमिः प्रशस्यते
शर्करा तुषवेशास्थिक्षाराङ्गारविवर्जिता ८

मेघदुन्दुभिनिर्घोषा सर्वबीजप्ररोहिणी
शुक्ला रक्ता तथा पीता कृष्णाभा वहिता क्षितिः  ९
द्विजराजन्यवैश्यानां शूद्राणां च यथाक्रमम्
परीक्षितायां भूम्यामं तु मध्ये तस्याः प्रणामतः  १०
उपलिप्य चतुर्हस्तं चतुरस्त्रं समं ततः
हस्तमात्रमधः खत्वा मध्ये तस्य दशाङ्गुलम्  ११
गर्तमुत्कीर्त्तयेत्तं वै पांसुना परिपूरयेत्
समे समगुणा ज्ञेया हीने हीनगुणा भवेत्  १२
वर्द्धमाने तु भूयो सौऽभवेद् गृद्धिकरी क्षितिः
नित्यं प्राङ्मुखमर्कस्य कदाचित्पश्चिमामुखम्  १३
स्थापनीयं गृहे सम्यक् प्राङ्मुखे स्थानकल्पना
भवनाद्दक्षिणे पार्श्वे रवेः स्नानगृहं स्मृतम्  १४
अग्निहोत्रगृहं कार्यं रवेरुत्तरतः शुभम्
उदङ्मुखं भवेच्छंभोर्मातृणां च गृहोत्तमम्  १५
ब्रह्मा पश्चिमतः स्थाप्यो विष्णुरुत्तरतस्तथा
निक्षुभा दक्षिणे पार्श्वे रवेः राज्ञी तु वामतः  १६
पिंगलो दक्षिणे भानोर्वामता दण्डनायकः
श्रीमहाश्वेतयोः स्थानं पुरस्तादशंशुमालिनः  १७
तत्तथो अश्विनौ द्वारि पूजाकर्मगृहाद्वहिः
द्वितीयायां तु कक्षायां राज्ञस्तोषौ व्यवस्थितौ  १८
तृतीयायां तु कक्षायां स्थितौ कल्माष पक्षिणौ
जान्दकोमाठरः स्थाप्यो दक्षिणां दिशमास्थितौ  १९
प्राप्नुयानूक्षतायौ तु पश्चिमां दिशमास्थितौ
उदीच्यां स्थापनीयस्तु कुबेरः सोम एव च  २०
उत्तरेणैव ताभ्यां तु रेवन्तः सविनायकः
यद्रवेर्विद्यते स्थानं चतुर्दिक्षु तु तद् भवात्  २१

अर्धाय मण्डले द्वे वै कार्ये सव्यापसव्ययोः
दद्यादुदयवेलायामर्धं सूर्याय दक्षिणे २२
उत्तरे मण्डले दद्यादर्धमस्तंगते रवौ
चतुरस्त्रं चतुः शृङ्गं व्योमदेव गृहाग्रतः २३
प्रतिमा पादसूत्रेण कार्यं मध्यस्य मण्डलम्
दिण्डः स्थाप्यः पुरस्तस्मादादित्याभिमुखस्तथा
एष स्थानविधिः प्रोक्तो देवानान्तु यथाक्रमम् २४
इति श्रीशाम्बपुराणे एकोनत्रिंशत्तमोऽध्यायः २९

त्रिंशत्तमोऽध्यायः

वसिष्ठ उवाच
अतः परं प्रवक्ष्यामि प्रतिमा विधिविस्तरम्
अर्चाः सप्तविधाः प्रोक्ता भक्तानां शुभवृद्धये १
काञ्चनी राजती ताम्री पार्थिवी शैलजा तथा
वार्क्षीवालेख्या गायन्ति मूर्त्तिस्थानानि सप्त वै २
मधुको देवदारुश्च राजवृक्षः स चंदनः
बिल्वश्चाम्रातकश्चैव खदिरश्चम्पकस्तथा ३
निम्बः श्रीपर्णवृक्षश्च त्वसनः सरलोऽर्जुनः
रक्तचन्दनपर्ययाः श्रेष्ठाः स्युः प्रतिमा द्रुमाः ४
वर्णानामानुपूर्व्येण द्वौ द्वौ वृक्षौ प्रकीर्त्तितौ
निम्वाद्याः सर्ववर्णानां वृक्षाः साधारणाः स्मृताः ५
क्षीरिणो वर्जिताः सर्वे दुर्बलास्ते स्वभावतः
चतुष्पथेषु न ग्राह्या पेये स्युस्तत्र वृक्षकाः ६
देवतायतनस्थाश्च ये च वल्मीक-संभवाः
उत्तीर्णाः देवता येषु चैत्यवृक्षाश्च ये स्मृताः ७
श्मशाना श्रयजातश्च पक्षिणां निलयाश्च ते

सकोटराश्च ये वृक्षाः शुष्काग्रा ये च पादपाः ८
अस्तानिलानलहताः कुञ्जराशन दूषिताः
ग्रामाभासरजोद्धस्ता बाला दुर्गधिनस्तथा ९
अकालफलपुष्पाश्च काले ताभ्यां विवर्जिताः
शीर्णव्रजाश्च तरवो रुक्षा ध्वांक्षनिषेविताः १०
एक शाखद्विशाखाश्च त्रिशाखा अधमा द्रुमाः
शुचौ समे विविक्ते च वेशाङ्गार विवर्जिते ११
पागुदवप्रवणे हृद्ये देशे कण्टकवर्जिते
विस्तीर्णस्कन्धविटपः पुष्पवानृजुरव्रणः १२
अभुग्नहीनो विकटः स तु ग्राह्यः शुभस्तरुः
तस्याप्यष्ट सुमासेषु ग्रहणं कार्त्तिकादिषु १३
प्रशस्ते पुष्यनक्षत्रे गुणयुक्ते शुभे दिने
शकुने च शुभे नित्यं सोपवासोऽधिवासयेत् १४
समःतादुपलभ्यापि तस्याधस्ताद्वसुन्धराम्
गायत्र्याः परिपूतेन परितः प्रोक्ष्य वारिणा १५
शुक्ले चापरिभुक्ते च परिधाय च वापसी
पूजये गन्धमाल्यैश्च धूपैः स्ववलिकर्मभिः १६
ततः कुशपरिस्तीर्णे हुत्वाग्निं च तदन्तिकम्
देवदारुसमिद्भिश्च मंत्रेणानेन तत्ववित् १७
ॐ प्रजापतये सत्यसन्धाय नित्यं स्रष्टे विधात्रे च चरात्मने नमः
सान्निध्यमस्मिन्कुरु देव वृक्षे सूर्यावृतं मण्डलमाविशय स्वाहा १८
एवं संपूजायित्वा तु वायव्येतं परिशान्तये
वृक्षलोकस्य शान्त्यर्थं गच्छदे देवालयं शुभम् १९
देव त्वं यास्यसि तत्र च्छेददाहविवर्जितः
काले धूपप्रदानेन स पुष्पैर्बलिकर्मभिः २०
लोकास्त्वां पूजयिष्यन्ति ततो यास्यसि निर्वृतिम्

वृत्तमूले कुठारं च धूपैः पुष्पैश्च पूजयेत्  २१
प्रायातायां तु शर्वर्यां पुनः संपूज्य दन्तरतम्
ब्राह्मणेभ्यस्ततो दत्वा याजकेभ्यश्च दत्तिणाम्  २२
छिन्द्याद्वनस्पतिं तज्ज्ञैस्तैः कृते स्वस्तिवाचने
पूर्वस्यां दिशि पातोऽस्य ह्यैशान्यां चापि यद्भवेत्  २३
अथवा चोत्तरस्यां तु तथा छिंद्यात्तु नान्यथा
पूर्वैशान्यामुदक्पातो दित्तुं तिसृषु चोत्तमः  २४
नैर्ऋत्याग्नेययाम्यासु दित्तु पाततरूःरुवशोभनः
वायवीवारुणीभ्यां तु दिग्भ्यां पातस्तु मध्यमः  २५
यस्य वश्य स्थिताः शाखाविनिर्द्दिष्टाः सुशाखिनः
ता सुपूर्वं ततदिछत्वा ततः पश्चादधोच्छिनत्  २६
अविलग्नमशब्दं च पतनं तु प्रशस्यते
उत्पाते द्दिलं यस्य आपश्च मधुरक्तयोः  २७
सर्पिस्तैलं त्तरेद्यस्तु पादपं तं विवर्जयेत्
त्तेदनं तत्त्तणे वापि मराडलं यस्य दृश्यते  २८
सगर्भं तं विजानीयाच्चिन्हैस्समुपलत्तितम्
पीतके मराडले गोधा कृष्णे दीर्घभुजङ्गमः  २९
गुडवर्णस्तु पाषाणः कपिले गृहग्रोधिका
अग्निवर्णे जलं ज्ञेयं मंजिष्ठामे भवेत् कृमिः  ३०
दावैरेतैर्विनिर्युक्तं दातुं दारु श्रेष्ठमुदाहरेत्
प्रत्ताल्य पल्लवैः सम्यक् क्वचित्कालं विधारयेत्  ३१

इति श्री शाम्बपुराणे प्रतिष्ठापनकल्पे
दारु परीत्ता नाम त्रिंशत्तमोऽध्यायः

## एकत्रिंशत्तमोऽध्यायः

वशिष्ठ उवाच

अतः परं प्रवक्ष्यामि प्रतिमालक्षणं क्रमात्
एकहस्ता द्विहस्ता च त्रिहस्ता वा प्रमाणतः १
तथा सार्द्धत्रिहस्ता वा सवितुः प्रतिभा शुभा
प्रसादाद्द्वारतो वापि यत्प्रमाणं प्रकीर्तितम् २
तद्वा प्रमाणं कर्तव्यं तततं शुभमिच्छता
एकहस्ता भवेत्सौम्या द्विहस्ता धनधान्यदा ३
त्रिहस्ता प्रतिमा भानोः सर्वकामप्रदास्मृता
सार्द्धतृतीयहस्ता तु सुभिक्षेमकारिका ४
अग्रे मध्ये च मूले च प्रतिमा सर्वतः शुभा
गान्धर्वी सा तु विज्ञेया बहुधान्यधनावहा ५
देवागारस्य यद्द्वारं तस्मादष्टाङ्गमुत्सृजेत्
तृतीये पिण्डिका कार्या द्विभागायः प्रतिमा भवेत् ६
अङ्गुलैः स्वैर्भवेन्मूर्तिरशीतिश्चतुरङ्गुला
विस्तारायामतः कार्या वदनं द्वादशाङ्गुलम् ७
मुखं त्रिभागं चिबुकं ललाटं नासिका तथा
कर्णौ नासिकयातुल्यौ पाण्योर्वा निपतेतयोः ८
नयने द्व्यङ्गुलेस्यातां तत्रिभागे तु तारके
तृतीयं तारका भागं कुर्यादृष्टिं विचक्षणः ९
ललाटं मस्तकोत्सेधं कुर्यात्तत्सममेव तु
परिणाहस्तु शिरसो भवेद् द्वादशःगुलम् १०
तुल्या नासिकया ग्रीवा मुखेन हृदयान्तरम्
मुखमाला भवेन्नाभिस्ततो मेदमनन्तरा ११
मुखविस्तारमुरसस्ततोऽर्द्धं तु कटिर्भवेत्
बाहूप्रवाहूतत्तुल्यावूरुजंधे च तत्समे १२
गुल्फाधस्तात्तु पादः स्यादुच्छ्रितश्चतुरङ्गुलेः
षडङ्गुला तु विस्त स्तिस्तथाङ्गुष्ठोंङ्गुलत्रयम् १३

प्रदेशिनी च तत्तुल्या हीना शेषनखान्नखम्
चतुर्दशाङ्गुलः पादस्यायामः परिकीर्त्तितः १४
एवं लक्षणयुक्तायाा भवेत् पूजितलक्षणा
अंसौ भुजौ तथैवोरुभ्रूललाटं चसनासिकम् १५
गण्डं च नियतं मूर्तेः कुर्यात्तज्ज्ञः समुन्नतिम्
विशा लधवला ताम्रापद्मलायतलोचनः १६
सस्मिताननपद्मास्य चारु विम्बाधरः शुभः
रत्नप्रोद्भासिमुकुटः कटकाङ्गदहारवान् १७
अव्यङ्गपद बन्धादि समायोगोप शोभितः
सुबाहु मण्डलश्चारु विचित्र मणि कुण्डलः १८
कराम्यां काञ्चनी मुद्रा प्राप्तहस्त सरोरुहम्
एवं लक्षण संयुक्तां कारये दीप्सितप्रदाम् १९
प्रजाभ्यश्च तदा भानुः शिवारोग्याभयप्रदः
अत्यङ्गायां नृपभयं हीनाङ्गायामकल्पता २०
ध्यातायां चक्षुषः पीडा कृशायां तु दरिद्रता
सक्षतायां भयं शास्त्रात् स्फुटिता मृत्युकारिणी २१
दक्षिणावनतायां तु शश्वत्स्यादायुषः क्षयः
उत्तरावनतायां तु वियोगो भवति ध्रुवम् २२
नातिलोक्या न चालोक्या ऋृज्वी मूर्त्तिः प्रशस्ते
तस्माद् भास्करभक्तेन लोकद्वयहितैषिणा २३
ता मूर्त्तयः शुभाः कार्यास्तधीनास्तु सम्पदः
शिरोरुगण्डवदनैः सर्वाङ्गावयवैस्तथा
एवं लक्षणसम्पूर्णा सा शुभा प्रतिमा नृपाम् २४

इति श्रीशाम्बपुराणे एकविंशत्तमोऽध्यायः २७

## द्वात्रिंशत्तमोऽध्यायः

वसिष्ठ उवाच
अतोऽधिवासनं कार्यं विधिदृष्टेन कर्मणा
सामुद्रं तोयमाहृत्य जाह्नव्यं यामुनं तथा १
सारस्वतं जलं पुण्यं चान्द्रभागं स सैन्धवम्
पौष्करं च जलं श्रेष्ठं गिरि प्रसवणोदकम् २
अन्यद्वा शुचि यत्तोयं नदीनदतडागजम्
यथाशक्त्या तदाहृत्य कलशैः काञ्चनादिभिः ३
ततस्तु मणिरत्नानि सर्वबीजौषधीस्तथा
सुगन्धानि च माल्यानि स्थलजान्यम्बुजानि च ४
चन्दनानि च मुख्यानि गन्धांश्च विविधान् वरान्
ब्राह्मीं सुवर्चलां मुस्तां विष्णुक्रान्तां शतावरीम् ५
दूर्वां च शंखपुष्पीं च प्रियगूं रजनीं वचाम्
संभृत्य तांस्तु संभारान् नानाकर्म विधानवित् ६
वटाश्वत्थाशिरीषाणां पल्लवैः कुशसंयुतैः
कलशो परिविन्यस्तैर्देयं स्नानोदकं रवेः ७
काञ्चनैराजतैस्ताम्रैर्मृन्मयैः कलशैस्तथा
साक्षतैस्सहितैश्च सर्वौषधि समन्वितैः ८
गायत्रीपरिपूतैस्तैरष्टभिः स्नापयेद्रविम्
कुशोत्तरां ततः कृत्वा वेदीं पक्वेष्टकामयीम् ९
तस्यां वेद्यां समारोप्य परिधाप्य च वाससी
प्रतिमामपि षिञ्चत सोपवासः प्रयत्नः १०
मूर्ध्नि सर्वौषधी दत्वा तथैव मलकानि च
वाक्यमुच्चारयेदेवमुपर्यवकिरन् जलम्
देवस्त्वामभिषिं चन्तु तु ब्रह्मविष्णु शिवादयः
व्योमगङ्गाम्बुपूर्णेन आद्येन कलशेन तु १२

मरुतश्चाभिषिंच तु भक्तिमन्तो दिवस्पते
मेद्यतोयसुपूर्णेन द्वितीयकलशेन तु १३
सारस्वतेन तोयेन पूर्णेन सुरसत्तमाः
विद्याधरा अभिषिंचन्तु लोकपालाः समागताः १४
सागरोदकपूर्णेन चतुर्थकलशेन तु
वारिणा परिपूर्णेन पद्मरेणु सुगन्धना १५
पंचमेनाभिषिंचन्तु नागाश्च कलशेन ते
हिमवद्धेमकूटाद्या अभिषिंचन्तु पर्वताः १६
निर्झरोदकपूर्णेन षष्ठेन कलेशेन तु
सर्वतीर्थाम्बुपूर्णेन कलशेन दिवस्पते १७
सप्तमेनाभिषिञ्चतु ऋषयः सप्त खेचराः
वसवश्चाभिषिञ्चन्तु कलशेनाष्टमेन ते १८
अष्टमङ्गलयुक्तेन देवदेव नमोऽस्तुते
स्नापयित्वा क्रमेणैणं स्नानकर्मविधानवित् १९
ततो वर्द्धनिकां गृह्य वारिधारां समुत्थृजेत्
त्रिंशत्तु पुरतोऽर्कस्य आचमस्वेति च ब्रुवन् २०
ततोऽन्यत्र शुचौ देशे सुसंपृष्टाचलेपने
तन्दुलैः पंचरागैश्च आलिखेञ्चतुरन्तिकम् २१
पताकातोरणच्छत्रध्वजमालाद्यलङ्कृतम्
विचित्रस्त्रग्वितानाढ्यं प्रकीर्णकुसुमोत्करम् २२
तस्य मध्ये कुशास्तीर्णे मूर्ति स्थाप्य विवस्वतः
तस्य चावाह्नानं कृत्वा दद्यादर्ध्यं प्रयत्नतः २३
सुवर्णमधुपर्कादि सुमनोदीपङ्कपजैः
देवस्य स्पर्शयेङ्गं च सवत्सां रोहिणीं शुभाम् २४
ऊं नमो गोपतय इत्युक्त्वा सहस्रांशो प्रसीदयेत्
एवम् मंत्रेण संपूज्य परिधाय च वाससी २५

यज्ञोपवीतमावेष्ट्य वद्धोत्संगस्तथैव च
सर्वगन्धैः समालिप्य चन्दना गुरुकु कुङ्कुमैः २६
अलङ्कारैरलंकृत्य कुसुमैश्च सुगन्धिभिः
मालाभिश्च विचित्राभिरावद्धाभिरनेकशः २७
ततो धूपं च नैवेद्यं दद्याच्चैव प्रयत्नतः
तत्तोरणं समुत्थाप्य मणेः श्रद्धया धिया २८
प्रज्वाल्याग्निं विधानेन कुर्याच्छांन्तिं विधानतः
ततः स्वस्तिकृतां स्नातां मणिरत्नविभूषिताम् २९
कृतां प्रतिष्ठितां रक्षां प्रतिमामधिवासयेत्
देवागारात्तथैशानेदिग्भागे दिव्यसंज्ञिते ३०
कृत्वा कुशपरिस्तीर्णे वरास्तरणसंवृते
पूर्वशीर्षां शुभां श्ययां शुक्लां दिव्यास्तरण संयुताम् ३१
यस्यां संवेशयेत् सम्यग्महाश्वेतामुदीरिताम्
निभुक्षां दक्षिणे पार्श्वे वामे राज्ञीं च स्थापयेत् ३२
दण्डपिङ्गलकौ चास्य स्थाप्यौ पादप्रवेशितौ
तस्यां शंखः सितायां तु शय्यायां प्रतिमां रवेः ३३
वसेच्च रजनीं तत्र स्तूयमानं चतुर्द्दिशम्
ब्राह्मणैर्बन्दिभिश्चापि गीतज्ञैर्वरणैस्तथा
कुर्याज्ञागरणं तत्र सूर्यभक्तिसमन्वितैः ३४
प्रभतायां तु शर्वर्य्यां बोधयेद् दिग्विधानतः
हविष्यं भोजयित्वा तु ब्राह्मणा याजकांस्तथा ३५
दक्षिणाभिश्च संपूज्य कृते वै स्वस्तिवाचने
दीनान्धकृपणादींश्च सर्वानन्नेन तोषयेत् २६
ततो गर्भगृहस्थानमध्ये कृत्वा तु पिण्डिकाम्
अवटे चास्य सौवर्णन्यस्य सप्तहयं रथम् ३७
सर्वबीजौषधींश्चैव तत्र दत्वा विधानवित्

दत्वार्धं स्थापयेत्तत्र यजमानः सहायवान् ३८
गौरांश्च सर्षपान् दत्वा अर्चां संस्थापयेत्ततः
शंख दुन्दुभिनिर्घोषैर्हस्ताधारासहाक्षतैः ३९
कृत्वा पुण्याहशब्देन स्वालयस्य प्रदक्षिणाम्
शुभे लग्ने दिने ऋक्षे पूर्वाह्णे मानवेक्षणे
मुहूर्त्ते क्ष शुभे भानोः प्रतिमां स्थापयेद्बुधः ४०
नाधोमुखीं नोर्द्धमुखीं न पार्श्वाननतां तथा
समामभिमुखीं चेमां प्रतिमां च निवेशयेत् ४१
पत्न्यौ चास्य ततः सम्यक् पार्श्वयोर्विनिवेशयेत्
निक्षुभां दक्षिणे पार्श्वे रवेराज्ञीं तु वामतः ४२
पिङ्गलो दक्षिणे भानोर्वामतो दण्डनायकः
स्थाप्यश्चैव ततो वह्निं संस्थाप्य विधिवत्पुनः ४३
यजमानस्य शांत्यर्थं शान्ति कर्म विधानवित्
होमयेत् सर्वदेवानां स्वाहाकारैरितस्ततः ४४
ततस्तदुपहारार्थं संभारैः प्रावसमाहृतैः
मोदकोल्लापिकापूपशष्कुली भूतशीर्षकैः ४५
कृसरैः पायसोन्मिश्रैः सर्वदिक्षु क्षिपेद्बलिम्
तर्पयेत्क्षीरभध्वाज्यैः स्तूर्यस्तोत्रैश्च भास्करम् ४६
विप्रेभ्यो याजकेभ्यश्च ततोदद्याच्च दक्षिणाम्
सूर्यऋतौ महापुण्ये तेन कुर्याश्च दक्षिणाम् ४७
स्थाप्यतेऽनेन विधिनामन्त्रक्तैः प्रतिमातु या
सा तु वृद्धिकरी नित्यं सान्निध्यं च सदा भवेत् ४८
क्षतुर्णामपि वर्णानां स्थायेद्यस्तुभास्करम्
सोत्तीर्णः सर्वसंसारात् सूर्यलोके महीयते ४९
पश्यन्ति मानवा ये तु आदित्यस्याधिवासनम्
सप्त जन्मसुतेजाता नीरोगाः संभवन्ति हि ५०

त्रिशत्रयमुपासन्ते भानोर्मालाधिवासितम्
गन्धमाल्योपहारैश्च ते यान्ति परमां गतिम्  ५१
आत्मीयं परकीयं च प्रतिमास्थापनं रवेः
यः पश्यति पुमान् भक्त्या स पापात्परिमुच्यते  ५२
दशानामश्वमेधानां वाजपेयशतस्य च
फलं प्राप्नोति पुरुषः प्रतिष्ठाप्य दिवाकरम्  ५३
यावत्कीर्तिः पुण्यकृतो भानोः स्थाननिवेशनात्
तावत् स तु यदुश्रेष्ठ सूर्यलोके महीयते  ५४
स्थापयित्वा रविं भक्त्या विधिदृष्टेन कर्मणा
मासे मासे क्रतुफलं लभते नात्र संशयः  ५५
एकाहेनापि यद्भानोः पूजया प्राप्यते फलम्
न व्रतैरुपवासैर्वो दानैर्वा समवाप्यते  ५६
कृत्वा तु य महत् पापं यः पश्चात् सेवते रविम्
स याति सूर्यलोके तु नरो विगतकल्मषः  ५७
न भवेद्दुष्टद्रारिद्र्यं चन्द्रेण सह मोदते
स्वर्गे महीयते तावद्यावत्सूर्यस्य वेश्मनि  ५८
इत्येवं सुख्यति तस्य यश्च भानोर्भूतानां स्थितिनिलयप्रसूतिहेतोः
श्रीभागी भवति नरो निकेशकारी कल्याणानां वसति शतं च
सूर्यलोके  ५९
यः प्रासादं रचयति पुमान् देवतानां प्रयत्नात्
कीर्तिस्तस्य भवति विपुलवंशमार्गानुजाता
दिव्यान् कामान् लभते च सदा कामतश्चा-
प्रमेयांस्तान् भु क्वासौ पुनरपि भवे चक्रवर्त्ती पृतिव्याम्  ६०
ये मानवास्त्रिदशमूर्तिनिकेतकानि कुर्वन्ति साधु यतदृष्टिमनोहराणि
तेषां मृते च परमार्थमये शरीरे लोके परिभ्रमति कीर्तिमयं शरीरम्
६१

इति मुनिऋषभ सुताय विष्णोर्विधिमुपदिश्य च नारदो जगाम
स च सवितुरिदं चकार भक्त्या भवनकरं भुवि शास्त्रतं च नाम्ना
६२
इति श्रीशाम्बपुराणे प्रतिमाकल्पो नाम द्वात्रिंशत्तमोऽध्यायः ३२

## त्रयस्त्रिंशत्तमोऽध्यायः

नारद उवाच
अतः परं प्रवक्ष्यामि ध्वजारोपणमुत्तमम्
पुरा देवासुरे युद्धे योद्धुं देवैर्जयेप्सुभिः १
कृत्वान्युपरि चिह्नानि वाहनानि शुभानि तु
लक्ष्मचिह्नध्वजः केतुरितिपर्य्यायनामभिः २
कीर्तितस्य च तस्येह प्रमाणं गदतः शृणु
ध्वजवंशस्तु कर्त्तव्यो ह्यविद्ध ऋजुरव्रणः ३
प्रासादेन स तुल्यस्तु ध्वजवंश प्रमाणतः
पताका च ध्वजे कार्या ध्वजवंशे विलम्बिनी ४
देवागारस्य शिखरान्तिकभागमपमार्जनी
युक्तवस्त्रमयी चित्रा सघंता सुमनोहरा ५
ध्वाजाग्रे चापि कर्तव्यो देवतालिङ्गसूचकः
काञ्चनो वाथ रौप्यो वा मणिरत्नमयोऽपि वा ६
रङ्का लिखिता वापि तद्वाहनसमाकृतिः
गरुत्मांस्तु ध्वजे विष्णोरीश्वरस्य ध्वजे वृषः ७
ब्रह्मणः पङ्कजं कार्यं रवेर्व्योम स्मृतं ध्वजे
हंसो जलाधिपस्योर्ध्वं धनदस्य नरो ध्वजे ८
भयूरः कार्तिकेयस्य हेरम्बस्य च मूषकः
कुञ्जरो देवराजस्य यमस्य महिषो ध्वजे ९
सिंहो ध्वजे तु दुर्गाया इत्येषा ध्वजकल्पना

यस्य यो वाहनः प्रोक्तो ध्वजस्तस्य स एव तु १०
ततः सर्वौषधीभिस्तु घ्रापयित्वा प्रयत्नतः
समालभ्य च कनीयान् मध्ये प्रतिसरन्ततः ११
कल्पयित्वा शुभां वेदीं कलशैरुमशोभिताम्
तस्यां वेद्यां समारोप्य तां रात्रिमधिवासयेत् १२
नानाकुसुमचित्रैश्च स्रजस्तस्यां च लम्बयेत्
अभ्यर्च्य वै प्रयत्नेन धूपमस्मै निवेदनम् १३
वलिरुर्म ततः कुर्यात् कृसरापूपकादिभिः
पललोल्लिपिकाभिश्च दधिषायसमोदकैः १४
उद्दिश्य लोकपालेभ्यो वलिं दद्यात्तु पायसम्
ब्राह्मणान् स्वस्तिवाच्यापि कृत्वा पुण्याहमङ्गलम् १५
वादित्रकृतनिर्घोषं जय शब्देन संकुलम्
शुभे लग्ने दिने ऋक्षे ध्वजमारोपयेद्बुधः १६
एवमारोपयेद्यस्तु ध्वजं देवालयोपरि
श्रिया संवर्धते नित्यं प्राप्नोति च शुभां गतिम् १७
न सुरा वस्तुमिच्छन्ति ध्वजहीने सुरालये
मैत्रस्तु स्थापने प्रोक्तो विधानज्ञैर्ध्वजस्य तु १८
एह्येहि भगवन्नीश विनिर्मिता परिचरवायु सार्धानुसारिणा
श्रीकरश्रीनिवासरिपुध्वसंकारिन् पद्मिनिलयसर्वदेवता
सततं कुरु सानिन्नध्यं शान्तिं स्वस्त्ययनं च मे भवतु--
सर्वविघ्ना अपसरन्तु स्वाहा । ध्वजारोपणमंत्रोऽयम् १९
इति श्री शाम्बपुराणे ध्वजारोपणं नामत्रयस्त्रिंशत्तमोऽध्यायः ३३

## चतुस्त्रिंशत्तमोऽध्यायः

वसिष्ठ उवाच
अथ सम्वत्सरे पूर्णे स्थापितस्य दिवस्पतेः

साम्बः पप्रच्छ भूयोऽपि नारदं चर्षिसत्तमम् १
साम्ब उवाच
स्थापितस्य सहस्रांशोः पूर्णे संवत्सरे पुनः
कथं सांवत्सरी पूजा कर्तव्या चर्षिसत्तम २
नारद उवाच
यथोक्तेन विधनेन प्रतिमास्थापने कृते
संवत्सरे ततः पूर्णे स्नानकर्म विधानवित् ३
तीर्थोदकमुपानीय ह्यन्यच्चापि जलं शुचिः
पूर्वोक्तेन विधानेन प्रतिमां स्नापयेद् बुधः ४
जपेच्च तीर्थनामानि मनसा संस्करेत्ततः
पुष्करं नैमिषं चैव कुरुक्षेत्रं पृथूदकम् ५
गंगा सरस्वती सिंधुश्चन्द्रभागा च नर्मदा
पयोष्णी यमुना ताम्रा क्षिप्रावेत्रवती नदी ६
सरितः सागराश्चैव सान्निध्यं कल्प्लयन्तु वै
एवं स्नानविधिं कृत्वाह्यर्पयित्वा प्रणम्य च ७
धूपमर्ध्यंच दत्वा तु प्रतिमामधिवासयेत्
त्रिरात्रं सप्तरात्रं वा मासार्द्धं मासमेव च ८
अतो हि कारयेद्यात्रां शन्तिहेतोर्जनस्य च
रथेनां दर्शनीयेन किंकिणीजालमालिना ९
प्रीणयित्वा द्विजान् सर्वान् दक्षिनाभोजनादिभिः
रथस्थं प्रतिमां कृत्वा कुर्यात् स्थानप्रदक्षिणम् १०
एवं वै क्रियमाणायां यात्रायां प्रतिवत्सरम्
प्रजाश्च सुखमेधन्ते राजा जयति चाहितान् ११
नीरुजश्च जनः सर्वो गवां शान्तिर्भवेत्तथा
कर्त्तारश्चापि यात्रायाः स्वर्गभाजो भवन्ति वै १२
साम्ब उवाच

कथं संचालयेद्भूयः स्थापितां प्रतिमां सकृत्
एतत्तु वद विप्रर्षे सुमहान् संशयो हि मे  १३
नारद उवाच
पूर्वमेव सहस्रांशोर्यानहेतोर्महात्मनः
संवत्सरस्यावयवैर्ब्रह्मणैः कल्पितो रथः  १४
सर्वेषां तु रथानामंवै श्रेष्ठः स च रथः स्मृतः
तं दृष्ट्वा तु ततस्त्वन्ये स्यन्दना विश्वकर्मणा  १५
कल्पितः सर्वदेवानां सोमादीनामनेकशः
वैवस्वतेन च ततो मानुषेद्द्वाकवे पुनः  १६
रथोदत्तस्तु तेनापि मानुषेष्ववतारितः
अतस्तु रथयानेन चालनं तु हितं रवेः  १७
तस्मान्न दुष्यते तेषां सवितुश्चालनं च यत्
तस्माद्रथेन पर्येति भास्करः पृथिवीमिमाम्  १८
गच्छन्न दृश्यते चैव मण्डलं सवितुः सदा
अदृश्यं चंचलं दृष्टं यस्माज्ञाम्बवती सुत  १९
तदेतां रथयात्रां तु दृष्ट्वा भानोर्मनीषिभिः
अन्येषां चालनं नास्ति देवानां यदुनन्दन  २०
ब्रह्मविष्नुशिवादीनां स्थापितानां विधानतः
तस्माद्रथेन देवस्य रवेर्यात्रा विधीयते  २१
प्रजानामिह शान्त्यर्थं प्रतिसवत्सरं तथा
काञ्चनो वाथ रौप्यो वा दृढदारुमयोऽपि वा  २२
दृढाद्वरथचक्रश्च रथः कार्यः सुयंत्रितः
तस्मिन् रथे वरे श्रेष्ठे कल्पिते सुमनोहरे  २३
आरोप्य प्रतिमां यत्नाद्यो जयेद्वाजिनः शुमान्
हरिल्लक्षणसम्पन्नाः सुखुखा वशर्त्तिनः  २४
कुंकुमेन समालब्धांश्चामरैश्च विभृषितान्

सदश्वान् यो जयित्वा तु रथाचार्यप्रदापयेत्  २५
विधिवत् पूजत्यित्वा तु धूपमाल्यानुलेपनैः
आहारैर्विविधैश्चापि भोजयित्वा द्विजोत्तमान्  २६
सूर्यक्रतौ वितते तु वितमाहुर्मनीषिणः
यच्चिन्तय भग्नाशः क्षुधया च प्रप्रीडितः  २७
अदाता हि पितृंस्तेन स्वर्गस्थान्निपातयेत्
यज्ञश्च दक्षिणाहीनः सवितुर्न प्रशस्यते  २८
तस्मान्नानाविधैः कामैर्भक्ष्य भोज्यान्न विस्तरैः
प्रीणयित्वा जनं सर्वं मिममुच्चारयेद्विधिम्  २९
वलिं गृह्णन्तु भोदेवा आदित्यावसवस्तथा
मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगाग्रहाः  ३०
सुराश्च यातुधानाश्च रथस्था देवताश्च याः
दिवपाला लोकपालाश्च ये च विघ्नविनायकाः  ३१
जगतः स्वस्ति कुर्वाणास्तथा दिव्या महर्षयः
मा विघ्नो मा च मे पापं मा च मे परिपंथिनः  ३२
सौम्या भवंतु तृप्ताश्च देवा भूतगणास्तथा  ३३
वामदेवैः पवित्रैश्च मानस्तोकरथन्तरैः
आकृष्टेन रजसेति ऋच एतामुदाहरेत्  ३४
तत पुण्याहशब्देन कृतवादित्रनिस्वरः
रथापक्रमणं कुर्याद्वर्त्मना सुखमेधते  ३५
पुरुषैश्चापि वोढव्यः सूर्यभक्तिसमन्वितैः
सुकृता ग्रहदानैश्च वलीवर्दैरथापि वा  ३६
यथा पर्वमुदानस्य विजने पथि गच्छतः
युगाक्षचक्रभंगो वा तथा नेयः शनैः शनैः  ३७
रथभंगे द्विजभयं भग्नेऽक्षे क्षत्रियस्य च
तुलाभंगे तु वैश्यानां शम्याः शूद्रभयं भवेत्  ३८

युगभंगे त्वनावृष्टिः पीठभंगे प्रजाभयम्
परचक्रागमं विद्याच्चक्रभंगे रथस्य तु ३९
ध्वजस्य पतने चापि भयं नृणां विनिर्दिशेत्
प्रतिमायां गतायां तु राज्ञीमरणमादिशेत् ४०
पर्य्यस्ते सुरथे वापि सर्वजानपदे भयम्
उत्पन्नेष्वेवमाद्येषु ह्युत्पातेष्वशुभेषु च ४१
वलिकर्म ततः कुर्याच्छान्ति होमं तथैव च
ब्राह्मणान् भोजयेद्यस्तु भूयो दद्याच्च दक्षिणाम् ४२
पूर्वोत्तरे दिशो भागे रथस्याग्निं प्रकल्पयेत्
समिद्भिस्तु घृताक्ताभिर्होमयेज्ञातवेदसम् ४३
स्वाहाकारं वदन् सम्यग्देवताभ्यस्त्वनुक्रमात्
ग्रहेभ्यश्च प्रजाभ्यश्च नामान्युद्दिश्य होभयेत् ४४
प्रथमं चाग्नये स्वाहा स्वाहा सोमाय चैव हि
स्वाहा प्रजापतये चैव दद्यादाहुतयः क्रमात् ४५
स्वस्त्यस्त्विह च विप्रेभ्यः स्वस्ति राज्ञे तथैव च
गोभ्यः स्वस्ति प्रजाभ्यश्च जगतः शान्तिरस्तु वै ४६
शन्नोऽस्तु द्विपदे नित्यं शन्नश्चास्तु चतुष्पदे
शं प्रजाभ्यतस्तथैवस्तु शं सदात्मनि चास्तु मे ४७
भूःशान्तिरस्तु देवेश भुवः शान्तिस्तथैव च
स्वश्चैवास्तु तथा शान्तिः शान्तिः सर्वत्र वास्तु नः ४८
त्वमेव जगतः सृष्टा पोष्टा चैव त्वमेव हि
प्रजाः पालय देवेश शान्तिं कुरुदिवस्पते ४९
इदमन्यच्च वक्ष्यामि शान्तैः परमकारणम्
यात्राकारणभूतस्य पुरुषस्य स्वजन्मनः ५०
दुष्टान् ग्रहांश्च विज्ञाय ग्रहशान्तिं समाचसेत्
प्रादेशमात्राः कर्त्तव्यास्समिधो वा प्रमाणतः

अर्कमय्यस्तथाऽर्कस्य पालाश्यः शशिनस्तथा ५१
खार्दियश्चैव सौमाय ह्यापामार्ग्यो बुधाय च
आश्वत्थाश्चैव जीवाय ह्यौदुंबर्यः सिवाय च ५२
शनये तु शमीमययो दूर्वाः कार्यास्तु राहवे
केतवे तु कुशाः कार्या दक्षिणां चाप्यतः शृणु ५३
सूर्याय चोत्तमां धेनुं शंखं दद्यात्तथेन्देवे
रक्तोर्णं चैव भौमाय कांचनं सोमसूनवे ५४
पीतवासांसि जीवाय शुक्रायाश्वं सितं तथा
शनैश्चराय गां नीलां राहवे खराड पायसम् ५५
छागं तु केतवे दद्याच्छृरावेषां भोजनानि च
गुडौदनं तु सूर्याय सोमाय घृतपायसम् ५६
हविष्यमन्नं भौमाय क्षीरान्नं सोमसूनवे
दध्यौदनं तु जीवाय शुक्रायाथ घृताशनम् ५७
तिलपिष्टं च माषं च सूर्यपुत्राय दापयेत्
राहवे दापयेन्मांसं केतवे चित्रमोदनम् ५८
यथा बाणप्रहाराणां वारणं कवचं स्मृतम्
तथा दैवोपघातानां शान्तिर्भवतु वारणम् ५९
अहिंसकस्य दांतस्थ धर्मार्जितधनस्य च
नित्यं च नियमस्थस्य सदानुग्रहणा ग्रहाः ६०
ग्रहा गावो नरेन्दाश्च ब्राह्मणाश्च विशेषतः
पूजिताः पूजयन्त्येते निदहन्त्यपमानिताः ६१
यथा समुत्थितं यंत्रं यंत्रेण प्रतिहन्यते
तथा समुत्थितां पीडां ग्रहशांत्यां प्रशामयेत् ६२
यज्वनां सत्यवाक्यानां तथा नित्योपवासिनाम्
जपहोमपराणां च ग्रहपीडा प्रशाम्यति ६३
एवं कृत्वा प्रजाशांतिं कृत्वा च स्वस्ति वाचनम्

पुनः सूर्यरथं कृत्वा कुर्यात् प्रक्रमणं ततः ६४
मार्गशेषं ततो गत्वा नयेद् देवालयं ततः
अवतार्य रथाच्चैनं स्थापयेन्मंडले तथा ६५
चतुर्थेऽहनि कर्तव्यं ततो विश्रमणं रवेः
धूपमाल्योपहारैश्च पूजयेन्मण्डले पुनः ६६
एवं विधिं तु सूर्याय कुर्यात् कोऽपि सुमानवः
स परार्द्धं तु वर्षाणां सूर्यलोके महीयते ६७
न कुले जायते तस्य दरिद्रो व्याधितोऽपि वा ६८
अथ संवत्सरे पूर्णे भानोर्यात्रादिने यदि
रथप्रक्रमणं तत्र कथं त्रि कृतं भवेत् ६९
ततो द्वादशवर्षे तु कर्त्तव्यं नान्तरा पुनः
शान्तिकर्म चकृत्वा वै होतव्यं भूतिमिच्छता ७०
शक्रध्वजस्य चाप्येवं यदि नोत्थापनं कुतम्
ततो द्वादशके वर्षे कर्त्तव्यं नान्तरा पुनः ७१
इति मुनिऋषभः सुताय विष्णोर्विधिमुपदिश्य तु नारदो जगाम
स च दशशत दीधितेश्चकार प्रणिपतितार्त्तिहरस्य देवयात्राम् ६२
इति श्रीशाम्बपुराणे देवयात्रा नाम चतुस्त्रिंशत्तमोऽध्यायः ३४

## पञ्चत्रिंशोऽध्यायः

वसिष्ठ उवाच
पुनर्यात्राविधिं चेमं समासात् कथयामि ते
नारदेनैव कथितं साम्बोऽनुग्रकारणम् १
वर्तमाने तु भावे वै रथे देवगणे स्थिते
यस्य यश्च नियोगः त्याद्देवस्य कथितो मया २
स तस्मिन्नेव मनसा स्थापनीयो रथे बुधैः
द्यौर्महीदेवमूर्तिस्थकथापूर्वं प्रकीर्तिता ३

तथैव राज्ञी द्यौर्ज्ञेया निक्षुभा पृथिवी स्मृता
एताभ्यामपि देवीभ्यां तथैव सवितुस्तथा ४
दण्डिनं पिंगलादीनां पृथक् कार्यो रथक्रमः
मनसा चिंतयेदेवं यथा स्थानेषु देवताम् ५
दिक्पालांल्लोकपालांश्च कल्पयेन्मनसैव तु
देवादेवमयश्चैव सर्वदेवमयस्तथा ६
मण्डलं त्वत्वृङ्गयं चैव छन्दासि च तथैव च
गायत्री चैव त्रिष्टुप्च जगत्यनुष्टुबेव च ७
पंक्तिश्च बृहती चैव उष्णिगेव च सप्तमी
अतोऽर्कवेदमयत्वाच्च छंदसां चैव कल्पनात् ८
रथप्रक्रमणे सूर्यो वोढव्यो ब्रह्मवादिभिः
उपवासपरैर्युवतै ब्राह्मणैर्वेदपारगैः ९
यथीवतकरणाच्चैव शुभाशान्तिर्भविष्यति
नायकश्चापि सर्वासां देवतानां दिवाकरः १०
विन्यासेषु रथानां च देवतायतनेषु च ११
ततो धूपोपहारैश्च संपूज्य प्रथमं ततः
दिग्देवानुचरांश्चैव पूजयन् पूज्यते श्रिया १२
अपूज्य प्रथमं सूर्यं मपरा यस्तु पूजयेत्
तदज्ञानकृतं पापं न तत् गृह्णन्ति देवताः १३
यात्राकाले तु संप्राप्ते सवितुर्दीक्षितां तनुम्
ये द्रक्ष्यन्ति तदा भक्त्या ते भविष्यन्त्यकल्मषाः १४
पौर्णमास्याममावश्यां दानं पुण्यतरं तथा
आषाढी कार्तिकी माधी तिथ्यः पुण्यतमाः स्मृताः १५
महत्वं च तिथेः पुण्यं यथाशास्त्रेषु भाषितम्
कार्त्तिक्यां च विशेषेण महाकीर्त्तिरुदाहृता १६
एवं कालसमायोगाद् यात्रकाले विशिष्यते

दर्शनाच्च महत् पुरायं सर्वपापहरं परम्  १७
उपवासपरो यश्च तस्मिन् काले धृतव्रतः
पूजयेद् भास्करं भक्त्या स गच्छेत् परमां गतिम्  १८
देवोऽयं यज्ञपुरुषो लोकानुग्रहकाङ्क्षया
प्रतिमायां स्थितो भूत्वा पूज्यते मानुषैः सदा  १९
स्नानाद्दानाज्जपाद्धोमात् संयोगाद्देवकर्मणः
शिरसो वपनाच्चैव दीक्षितः पुरुषो भवेत्  २०
केशानां वपनं कार्यं सूर्यभक्तैस्सदा नरैः
सूर्यक्रतौ शुचिश्चैवं दीक्षितः पुरुषो भवेत्  २१
चतुर्णामपि वर्णानां भक्त्या सूर्यं च नित्यशः
एवं ये तु करिष्यन्ति ते नरा नित्यदीक्षिताः
तीर्णव्रता महात्मानः प्राप्नुवन्ति शुभां गतिम्  २२
इति शाम्बपुराणे पञ्चत्रिंशोऽध्यायः  ३५

## षट्त्रिंशत्तमोऽध्यायः

वशिष्ठ उवाच
अथातः सम्प्रवक्ष्यामि ह्यग्निधूपविधिक्रियाम्
स्नानमाचमनं चाथोऽर्घ्यदानं तथैव च  २
अथ मृद्भिस्त्रिभिः स्नात्वा वससी निर्मले शुभे
परिधाय च सवित्र्याऽथाचमेच्च प्रयत्नतः  ३
जलस्थो नाचमेद्विद्वद्द्वांजलादुत्तीर्य नित्यशः
आचमेत्तु प्रयत्नेन सावित्र्या सु समाहितः  ४
अप्सु सूर्यस्तथाग्निश्च नागदेवी सरस्वती
तस्मादुत्तीर्य चाचामेन्नोपहन्याज्जलाशयम्  ५
उपविश्य शुचौ देशे प्रयतः प्रागुदङ्मुखः
पादौ प्रक्षाल्य हस्तौ च अन्तर्जानुस्तथाचमेत्  ६

प्रसन्नस्त्रिः पिबेदापः प्रयतः सुसमाहितः
द्विधापमार्जनं कृत्वा त्रिभिरभ्युक्षणं पुनः ७
मूर्द्धानं खानि वात्मानमुपस्पृश्यानुपूर्वशः
आचान्तो नमस्कृत्य शौचेच्छुः शुचितामियात् ८
क्रियां यः कुरुते भोहादनाचम्येह नास्तिकः
भवति ता वृथा तस्य क्रियाः सर्वा न संशयः ९
शुचिष्कामा हिते देवा वेदे च समुदाहृताः
नास्तिकं चाशुचिं चैव वर्जयन्ति सदा सुराः १०
ऋषयः पितरश्चापि ये चान्येऽपि शुचिव्रताः
शौचमेवं प्रशंसन्ति शौचाज्ज्ञानं विधीयते ११
आचान्तो मौनमास्थाय देवागारं विशेत्ततः
नियमनं कृत्वा श्वासस्य प्राणमाच्छाद्य वाससा १२
शिरः प्रावृत्य चैवाप्यवेशोदविनिवृत्तये
ततः पूजां रवेः कुर्यात् पुष्पैर्नानविधैः शुभैः १३
जपेन वर्त्तमानेन संहितायां करान् जपन्
धूपं ततोऽग्नये दत्वा प्रथमं गुग्गुलाहुतिम् १४
पुष्पञ्जलिं ततो गृह्य तच्छिलायां प्रधूप्य च
रवेर्मूर्द्धनि तं दत्वा वाचमेतामुदाहरेत् १५
ॐ व्रतनयं व्रतिनो वर्द्धयन्ति देवा मनुष्या पितरश्च सर्वे
तस्यादित्यस्य प्रसवामनामहे यस्तेजसः प्रथममजो विभाति १६
धूपवेलाः स्मृताः पञ्च जपेष्वैवं च पञ्चसु
महाविद्यासु याः पञ्च वक्ष्येऽहं ताः पुनः क्रमात् १७
दंडनायकवेला तु प्रदोषे ऋक्षदर्शनात्
राज्ञीवेला तु प्रत्यूषे तद्वत् कार्या विजानता १८
त्रिकालं तु रवेः पूजा कर्तव्या सूर्यदर्शनात्
अर्द्धोदिते खमध्यस्थे भानोर्वास्तं गते तथा १९

मिहिराय च पूर्वाह्णे मध्याह्ने ज्वलनाय च
अघोद्यन्मण्डले देया नीचाह्ने वरुणाय च २०
रक्तचन्दनमिश्राणि गन्धोदकयुतानि च
पद्मानि करवीराणि तथा रक्तोत्पलानि च २१
कुङ्कुमोदकमिश्राणि तथा कुरूटकानि च
गन्धाद्यान्यथवान्यानि कृत्वा ताम्रस्य भाजने २२
भूयो धूपं ततो दद्यात् सहर्षं तांगुग्गुलाहुतिम्
अर्धपालं ततो गृह्य कुर्यादावाहनं करैः २३
एहि सूर्य सहस्रांशो तेजोराशे जगत्पते
अनुकम्पय मां भक्त्या गृहाणार्घं दिवाकर २४
अनेनावाहनं कृत्वा जानुभ्यां संस्थितः क्षितौ
खेर्निवेदयेदर्घमादित्यहृदयं जपेत् २५
ऊं नमो भगवते आदित्याय वरिष्ठाय वरेण्याय ब्रह्मलोकैककर्त्रे
ऊं ईशानाय पुराणाय पुराण पुरुषाय च २६
ऊं सोमाय च ऋग्यजुः सामाथर्वणे नमः २७
ऊं भूः ऊं भुवः ऊं स्वः ऊं महः ऊं जनः ऊं तपः ऊं सत्यम्
ब्रह्मणे मध्यपरत आदित्यायेति स्वाहा २८
सावित्र्या परिपूतेन वारिणा तु ततः परम्
परितः परिसूज्याथ धूपभाजनमुच्छ्रियेत् २९
ऊं भूर्भुस्स्वस्त्रत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि
धियो यो नः प्रचोदयात् ३०
ततो निवेदयेद्रूपेत् वृचमेतामुदाहरन् ३१
त्वमेको रुद्राणां वसूनां पुरातनो देवानां गीर्भिरभिष्टुतः
शाश्वतो दिवि ३२
पूर्वाह्णेऽनेन मंत्रेण मध्याह्ने चाप्यनेन तु ३३
ऊं नमो ज्वालामालाय तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः

दिवीव चक्षुराततं खायाह्ने चाप्यनेन तु ३४
ॐ नमो वरुणाय ॐ आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृत्त मर्त्यं च
हिरण्ययेन सविता रथेन देवो याति भुवनानि पश्यन् ३५
अनेन विधिना दत्वा धूपं सूर्याय भोजकः
उत्क्षिप्तेनैव धूपेन विशद्गर्भगृहं ततः ३६
ततः प्रविश्य धूपं तु प्रतिमायै निवेदयेत्
मंत्रेण मिहिरायेति धूपं दत्वेति नित्यशः ३७
ततो राज्ञीं नमस्कृत्य निक्षुभायै नमो नमः
दण्डनायकसंज्ञाय पिंगलाय च वै नमः ३८
ततो राज्ञे च तोषाय कल्माषाय गरुत्मते
ततः प्रदक्षिणं कुर्वन् दिग्देवेभ्यो निवेदयेत् ३९
दंडिने च ततो दद्याद्रैवन्तानुचराय च
पूर्वेण नमइन्द्राय दक्षिणेन यमाय च ४०
पश्चिमेन जलेशाय कुबेरायोत्तरेण च
उत्तरेणैव सोमाय दद्याद्धय विचक्षणः ४१
शृङ्गे सौमनसे धूपमीशानाय निवेदयेत्
ज्यौतिषं त्वग्नये दत्वा पितृश्चचित्रसंज्ञके ४२
चन्द्रभासे ततः शृङ्गे धूपं दत्वा तु वायवे
मध्ये नारायणाख्याय सूर्याय परमात्मने ४३
आदित्येभ्योऽप्यरुद्रेभ्योमरुद्ध्यश्चाश्विभ्यस्तथा
या ह्यस्मिन् देवता व्योम्नि नमस्ताभ्योऽपि नित्यशः ४४
एवमुद्दिश्य नामानि धूपं दत्वा ततस्तवैः
उत्क्षिप्तो यत्र वै धूपो मुक्त्वा तत्रैव तं पुनः ४५
सूर्यं गुह्यैरभिष्टुत्य ह्येवं विज्ञापयेत्ततः
अर्चितो हि यथाशक्त्या मया शक्त्या विभावसो ४६

ऐहिकामुष्मिकीं नाथ कार्यसिद्धिं कुरुष्व मे
एवं त्रिषवणस्नातो योऽर्चयेत्प्रयतः सदा
विधिना तु यथोक्तेन सोऽश्वमेधफलं लभेत् ४७
यश्चैवं कुरुते नित्यं यथोक्तं धूपविस्तरम्
सुपुत्रवानरोगी च मृतः संलीयते रवौ ४८
विधिना तु यथोक्तेन क्रियमाणानि यत्नतः
सर्वकर्माणि सिध्यन्ति सफलानि भवन्ति च ४९
पुष्पश्रेष्ठं च दानं स्यात्पत्रं समुपहारयेत्
पत्रं न स्यात्ततो धूपं धूपो न स्यात्ततो जलम् ५०
सर्वं न स्यात्तदा चैव प्रणिपातेन पूजयेत्
अशक्तः प्रणिपातेऽपि मनसा पूजयेत्ततः ५१
असंभवे तु द्रव्याणां विधिरेष प्रकीर्तितः
द्रव्याणां संभवे चैव सर्वमेवोपहारयेत् ५२
मंत्राद्याः कथिता ये तु पुष्पधूपनिवेदने
व्याहारात् स्मरणाच्चैव तेषां प्रीतो भवेद्रविः ५३

इति श्रीशाम्बपुराणे षट्त्रिंशत्तितमोऽध्यायः ३६

## सप्तत्रिंशत्तमोऽध्यायः

वसिष्ठ उवाच
अतोऽग्रे संप्रवक्ष्यामि विधानमनुपूर्वशः
धूपो निवेद्यते येन आदित्यस्याग्निना सदा १
शुचिरग्निः स्मृतः सूर्यो वायुस्तस्य सुतः स्मृतः
अस्यान्तःस्थः स वै यस्मात्ततोऽसौ वायु नान्तरः २
अतोऽस्य तेज उत्थाप्य रवेर्धूपं निवेदयेत्
तमुत्थाप्य विधानेन शुचौ देशे निवेश्य च ३
मंत्रेण तु रविं देवं नित्यमेवं प्रसादयेत्

अरण्यां तु शमीमय्यां पिप्पल्यां पुत्र कंरवेः ४
निर्यथ्य तं समुत्थाप्य धमयेद्रव्यजनेन तु
मूर्तिमुल्लिख्य दर्भेण ह्यग्निं संस्थाप्य यत्नतः ५
ततः सुचं स्त्रुवं चैव प्रणीतामाज्यभाजनम्
प्रभृज्य स्पर्शयेदग्निं कुशेनाग्निं च संस्पृशेत् ६
कुशं गृह्य तु हस्ताभ्यामाज्यं प्रथममुत्सृजेत्
नाग्निं मुखेनोपधमेन्न च पादौ प्रतापयेत् ७
अधस्तान्नोपध्यायाच्च न चैनमभिलङ्घयेत्
सुसमिद्धं ततः कृत्वा होमयेज्जातवेदसम् ८
प्रोदशमात्राः कर्तव्याः समिधोऽथ प्रमाणतः
पृथुप्रमाणा कर्त्तव्या देवदारुमयी तथा ९
अतिमात्रा तथेध्याश्च कर्तव्याः स्वप्रमाणतः
पालाशोऽर्कस्त्वपामार्गः शम्यश्वत्था विकंकतः १०
उदुंबरस्तथाबिल्वश्चन्दनो यज्ञियाश्च ये
सरलो देवदारुश्च शालश्च खदिरस्तथा ११
समिदर्थे प्रशस्तास्तु वृक्षा ह्येते प्रकीर्तिताः
श्लेष्मातको नक्तमालः कपित्थः शाल्मलीं तथा १२
बिल्वजः कोविदारश्च करंजः शल्लकी द्रुमः
चिरबिल्वस्तथाक्रोंटस्तित्तककाम्रतकौ तथा १३
निम्बो विभीतकश्चैते होमकर्मणि गर्हिताः
एवं समेधितस्याग्नेः समन्तात् कुश विष्टरम् १४
दत्वा प्रागुत्तमं तं तु ततस्तं परिमार्जयेत्
सावित्रीमंत्रपूतेन वारिणात्रिः समं ततः १५
ततः कुशमयं कृत्वा ह्यात्मनोऽथाङ्गुलीयकम्
ततोऽग्नेर्दक्षिणे पार्श्वे कल्पयेद् ब्रह्मणस्तनुम् १६
ततः सुचं स्त्रुवं चैव प्रणीतामाज्यभाजनम्

प्रक्षाल्य स्पर्शयेदग्निं स्रुवं चाज्येन संस्पृशेत् १७
ततौ भूमौ निषण्णेन जानुना सुसमाहितः
पाणी तु पुटकौ कृत्वा प्रणमेज्जातवेदसम् १८
आह्वानं तु ततः कृत्वा रवेस्तत्र समाहितः
पुराणोक्तेन मंत्रेण ह्यनेनाथ कृतांजलिः १९
नमो नमो यो भवती हशश्वदुत्तिष्ठमानो जगतो हिताय
आवाहयाम्यद्य तमीशमाद्यं करोतु सोऽग्नाविह सन्निधानम् २०
एह्ये हि सूर्याक्षयविश्वमूर्ते अबिन्धनोऽग्नेः शुचिनामधेय
इमां स्वकीयां तनुमाविशस्व हविर्हुतं देवमथा समीक्ष्य २१
एवं कृत्वाग्निसंस्कारं साह्वनं च दिवाकरम्
ततो विज्ञापयेदग्निमृचमेतामुदाहरेत् २२
ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम
मह्यं न मतां प्रदिशश्चतस्त्रस्त्वयाध्यक्षेण पृतना जपेम् २३
उत्तिष्ठ पुरुषर्ष भहरिपिंगलदीप्तजिह्व लोहिताक्षदेहि मे ददामिते स्वाहा २४
ततः परमग्निहोत्र मंत्रेण मार्ग मुच्चरन् परमाहुतिं दद्यादादाय स्वाहा २५
तथैव च यत्र आत्मीये मत्विषास हिताय च
ततः प्रादेशमात्राभिः पालाशीभिर्यथा विधि २६
देवदारुमयीभिश्च शमीमयीभिरेव च
समिद्भिश्चधृताक्ताभिर्होमये जातवेदसम् २७
रत्निमात्रं स्रुवं गृह्य धृतेनैव तु होमयेत्
अतः क्षीरेण गव्येन ततोऽन्नेन च होमयेत् २८
नवाभिरोषधीभिश्च तिलव्रीहि यवैस्तथा
शालीफलकश्यामाकैर्गोधूमैश्चैव होमयेत् २९
पौर्णमास्याममायां वा होमयेच्च विशेषतः

चैत्र्यां तथाऽश्वयुज्यां च कुर्यादग्निं तथा क्रियाम्  ३०
बहुहव्येन्धनैश्चाग्नौ सुसमिद्धे विशेषतः
विधूमे लेलिहाने च होमये कर्मसिद्धये  ३१
अप्रबुद्धे सधूमे वा जुहुयान्न हुताशने
यजमाना भवेदन्धौ ह्यपुत्र इति च श्रुतिः  ३२
अर्चिष्मान् पीडित शिखस्तप्तकांचन सन्निभिः
स्निग्धः प्रदक्षिणावर्त्तो वह्निः स्यात्कार्यसिद्धये  ३३
नवाकल्याणी युवतिर्न्नाल्पविद्यो न बालिशः
होता स्यादग्निहोत्रस्य नार्त्तो ना संस्कृतस्तथा  ३४
नरकं तु पतन्त्येते जुह्वतश्च धनक्षयः
तस्माद्विज्ञानकुशलो होता स्याद्वेदपारगः  ३५
यत्फलम् कर्मणस्तस्य ततो निगदितं शृणु
अध्यक्षः सर्वकामोऽयं सोऽश्वमेधफलं लभेत्  ३६
इति श्रीशाम्बपुराणे अग्निविधानं नाम सप्तस्त्रिंशत्तमोऽध्यायः  ३७

## अष्टत्रिंशत्तमोऽध्यायः

वसिष्ठ उवाच
तत्तेहं वर्णयिष्यामि साम्बेन च यथा पुनः
नारदः परमोदारः पृष्टोऽभूत् संशयो महान्  १
साम्ब उवाच
श्रुता दारुपरीक्षा मे प्रतिमालक्षणं तथा
देवयात्राविधानं च ह्यग्निकार्यविधिं तथा  २
अतः परं तु विप्रेद्र प्रब्रूहि मम पृच्छतः
देवपूजाफलं यच्च यच्च दानफलं भवेत्  ३
प्रणिपाते नमस्कारे तथा चैव प्रदक्षिणे
धूपदीपप्रदाने च संमार्जनविधौ च यत्  ४

उपवासे च यत्प्रोक्तं तत्फलं नक्त भोजनम्
अर्धश्च कीदृशः प्रोक्तः कुत्र वा संप्रदीयते ५
नारद उवाच
कथं च क्रियते भक्तिः कथं देवः प्रसीदति
भक्तिं श्रद्धां समाधिं च कथ्यमानां निबोध मे ६
मनसा भावना भक्तिरिच्छा श्रद्धा च कथ्यते
ध्यानं समाधिरित्युक्तं शृणु भक्ति विकल्पनाम् ७
तत् कथायां रमेद्यस्तु स वै भक्तः सनातनः
नित्यं तु तन्मनाश्चैव देवपूजारतः सदा ८
तत्कर्मकृद्भवेद्यतु स वै भक्तः सनातनः
देवार्थं क्रियमाणानि यः कर्माण्यनुमन्यते ९
कीर्त्तनाद्बाष्परोमांचीः सवै भक्ततरो नरः
नाभ्यसूयेच्च तद्भक्तं न वन्द्या चान्य देवता १०
आदित्यव्रतधारी च स वै भक्ततरो नरः
एवं विधा क्रिया भक्तिः सदा कार्या विजानता ११
गच्छंस्तिष्ठन् स्वघ्रन्चयन् जिश्च निमिषंस्तथा
यः स्मरेद् भास्करं नित्यं स वै भक्ततरो नरः १२
भक्त्या समाधिना चैव शुद्धेन मनसा तथा
क्रियते नियमो यस्तु दानं वा यत्प्रदीयते १३
प्रतिगृह्णान्ति तद्देवा मनुष्याः पितरस्तथा
पत्रं पुष्पं फलं तोयं भक्त्या यत्समुपाहृतम् १४
प्रतिगृह्णन्ति तद्देवा नास्तिकान् विवर्ज्जयन्ति च
भावशुद्धिः प्रयोक्तव्या नियमाचारसंयुता १५
भावशुद्ध्या कृतं यद्यत् तत्सर्वं सफलम् भवेत्
स्तुतिः जाप्योपहारेण पूजया च विवस्वतः १६
उपवासेन षष्ट्यां च सर्वपापैः प्रमुच्यते

प्रणिधाय शिरो भूभ्याः नमस्कारं करोति यः १७
तत्क्षणात् सर्वपापेभ्यो मुच्यते नात्रसंशयः
भक्तियुक्तो नरो यस्तु रवेः कुर्यात् प्रदक्षिणाम् १८
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुंधरा
सूर्यं मनसि यः कृत्वा कुर्याद्वा च प्रदक्षिणाम् १९
प्रदक्षिणीकृतास्तेन सर्वे देवा भवन्ति हि
एकहारपरो भूत्वा षष्ठ्यां योऽर्चयते रविम् २०
नियमव्रतधारी च रवेर्भक्तिसमन्वितः
सप्तम्यां च महाप्राज्ञःसोश्वमेधफलं भवेत् २१
अहोरात्रोपवासेन पूजयेद्यस्तु भास्करम्
सप्तम्यामथ षष्ठ्यां च सूर्यलोकं स गच्छति २२
शुक्लपक्षस्य सप्तम्यामुपवासपरो नरः
सर्वरक्तोपहारेण पूजयेद् यस्तु भास्करम् २३
सर्वपापविनिर्मुक्तः सूर्यलोकं स गच्छति
अर्कसंपुटं संयोज्य मुद्रकप्रसृतिं पिबेत् २४
क्रमवृद्ध्या चतुर्विंशदेकैकं जपयेत् पुनः
द्वाभ्यां संवत्सराभ्यां तु समाप्तनियमो भवेत् २५
सर्वकामप्रदाह्येषा प्रसिद्धार्कस्य सप्तमी
माधशुक्लस्य सप्तभ्यां सदाऽऽदित्यदिनं भवेत् २६
सप्तमी विजया नाम तत्र दत्तं महत् फलम्
स्नानं दानं जपो होम उपवासस्तथैव २७
सर्व विजय सप्तभ्यां महापातकनाशनम्
ये त्वादित्यदिने प्राप्ते श्राद्धं कुर्वन्ति मानवाः २८
जपन्ति च महाश्वेतां ते लभन्ते यथेप्सितम्
येषां धर्मक्रियाः सर्वाः सदैवोद्दिश्य भास्करम् २९
न कुले जायते तेषां दरिद्रो व्याधितोऽपि वा

श्वेतया रक्तया वापि पिबन्ति मृत्तिकया पि वा  ३०
उपलेपनकर्त्ता च चिन्तितं लभते फलम्
चित्रभानुंविचित्रैश्च कुसुमैस्तु सुगन्धिभिः  ३१
पूजयेत् सोपवासो यः स कामानीप्सिसतां लभेत्
घृतेन दीपं प्रज्वाल्य तैलेन वा पुनः युमान्  ३२
दीर्घायुर्वपुषा युक्तश्चक्षुषा न च हीयते
दीपदानान्नरो नित्यं ज्ञानदीपेन दिप्यते  ३३
स च बुद्धान्द्रियैश्चापि न कदाचिद्विमुह्यति
तिलाः पवित्रं परमं तिलदानमनुत्तमम्  ३४
अग्निकार्ये च दीपे च महापातकनाशनम्
दीपं ददाति यो नित्यं देवस्यायतनेषु च  ३५
चतुष्पथेषु रथ्यासु रूपवान् सुभगो भवेत्
हविषा प्रथमो कल्पो द्वितीयस्त्वौषधीरसः  ३६
वस्त्रामेदोऽस्थिनिर्यासो नतु देयः कथचन
भवत्यूर्द्धगतिर्दीपो न कदाचिदधो गतिः  ३७
दानं दीपस्य वाप्येवं न तिर्यग्गतिमाप्नुयात्
ज्वलन्तं तु सदा दीपं न हरेन्नापि नाशयेत्  ३८
दीपहर्त्ता मवेदन्धस्तमो गतिमवाप्नुयात्
दीपदाता स्वर्गलोके दीपमालेव राजते  ३९
यः सदाऽर्चयते सूर्यं चन्दनागुरुकुङ्कुमैः
स पूज्यते नरी नित्यं धनेन यशसा श्रिया  ४०
रक्तचन्दनमिश्रैस्तु रक्तपुष्पैः शुचिर्नरः
उदयेऽर्धं सदा दत्वा सिद्धिं संवत्सराल्लभेत्  ४१
उदयात् परिवर्त्तस्तु यावदस्तमनस्थितः
जपन्नभिमुखः किंचित् मन्त्रं स्तोत्रमथापि व
आदित्यस्य ब्रतं यत्तन्महापातकनाशनम्  ४२

अर्धेन सहितां चैव सवत्सां गां प्रदापयेत्
उदये श्रद्धया युक्तः सर्वपापैः प्रमुच्यते ४३
सुवर्णधेन्वनड्वाहं वसुधां वस्त्रसंयुताम्
अर्धं प्रदाय लभते सदा जन्मानुगं फलम् ४४
अग्नौ तोये चान्तरिक्षे शुचौ भूम्यां तथैव च
प्रतिमायां तथा पिण्ड्यां दद्यादर्धं प्रयत्नतः ४५
ना सव्यं न वा सव्यं दद्यादभिमुखः सदा
सघृतं गुग्गुलं दग्ध्वा रवेर्भक्तिसमन्वितः ४६
तत्क्षणात् सर्वपापेभ्यो मुच्यते नात्र संशयः
कर्पूरागुरुधूपानां दातारः स्वर्गगामिनः ४७
अयने ह्युत्तरे सूर्यमथवा दक्षिणायने
पूजयित्वा विशेषेण सर्वपापैः प्रमुच्यते ४८
विषुवेषूपरागेषु षडशीति मुखेषु च
पूजयित्वा रविं भक्त्या नात्मानं शोचेयेत् पुनः ४९
एवं वेलासु सर्वासु त्ववेलासु च मानवः
भक्त्या पूजयते योऽर्कं सोऽर्कलोके महीयते ५०
कृसरैः पायसापूपैः पललीन्मिश्रितोदनैः
बलिं दत्वा तु सूर्याय सर्वकाममवाप्नुयात् ५१
घृतेन तर्पणं कृत्वा कार्यसिद्धिं लभेन्नरः
क्षीरेण तर्पणं कृत्वा मनस्ता पैर्न युज्यते ५२
दध्ना तु तर्षणं कृत्वा कार्यसिद्धिं लभेन्नरः
मधुना तर्पणं कृत्वा सिद्धिं संवत्सराल्लभेत् ५३
स्नानार्थमाहरेद्यस्तु जलं भानोः समाहितः
तीर्थाद्वा शुचि वार्यन्यत् सयाति परमां गतिम् ५४
छत्रं ध्वजां वितानं च पताकां चाम्बराणि च
श्रद्धया भानवे दत्वा गतिमिष्टामवाप्नुयात् ५५

यच्च द्रव्यं नरो भक्त्या आदित्याय प्रयच्छति
तत्तस्माच्छतसाहस्रमुत्पादयति भास्करः ५६
मानसं वाचिकं चापि कार्यकं यच्च दुष्कृतम्
सर्वं सूर्यप्रणामेन तत्क्षणादेव नश्यति ५७
एकाहेनापि यद्भानोः पूजया प्राप्यते फलम्
यथोक्तदक्षिणैरिष्टैर्नतु ऋतुशतैरपि ५८
इति श्री साम्बपुराणे अष्टत्रिंशत्तमोऽध्यायः ३८

## एकोनचत्वारिंशत्तमोऽध्यायः

बृहद्बल उवाच
समासव्यासयोगेन पुराणमिदमव्ययम्
श्रावितोऽहं त्वया ब्रह्मन् गुरो निःश्रेयसं परम् १
तथापि संशयोऽस्माकं नाद्यापि विगतः प्रभो
साम्बं प्रति महाभाग तन्त्रे ब्रुहि महात्मनम् २
कथं सदीक्षितस्तेन भास्करेण महात्मना
साम्बः परमधर्मात्मा तन्ममाख्यातु मर्हसि ३
वशिष्ठ उवाच
एकाग्रं मानसं कृत्वा वृत्तिं सम्यग्व्यवस्थिताम्
श्रद्धया परया युक्तः शृणुयात्तत् समीहितम् ४
पुराणस्योत्तरं राजन् यदुक्तं भास्करेण तु
तत्तेऽहं संप्रवक्ष्यामि दीक्षामण्डलमुत्तमम् ५
साम्बं प्रति महाबाहो यदुक्तं भास्करेण तु
तन्महामण्डलं नाम तत्वं मंत्रविभूषितम् ६
यथाव्यवस्थितात् स्थानाद्भूमिं निष्क्रम्य शेधयेत्
याम्यं माहेन्द्रं वायप्यं कौबेरं च यथाक्रमम् ७
माहेन्द्रं विजयो नित्यमर्थपाप्तिश्च निश्चला

शत्रूणां निधने चैव मित्रलाभश्च दक्षिणे ८
प्रतिपक्षोन्नतिर्व्याधिर्नियमेन जलाधिपे
सम्यक् शान्तिः सुतवाप्तिः प्रजा मोदति विज्वरा ९
आग्नेयः शोषकः प्रोक्तो नैर्ऋत्यः पापसंकरः
मारुतश्चाव्यवस्थानमैशान्यं ज्ञानलंभवम् १०
तेषां निरूपितं स्थानं यथाकामं समाहिताः
दृष्टदोषपरिक्रान्तां भूमिं कुर्वति साधकाः ११
रत्निमालमधः खातां समन्तात् पञ्चविंशकम्
कृत्वा तु सुसमं देशं प्रागुदक्प्लवनं शुभम् १२
प्राग्वंशं तत्र कुर्वीत ब्रह्मवृक्षमयं शुभम्
परितः कारयेद् भूमिं सुसमां शोभनां तथा १३
उदुंबरमयं कृत्वा लांगलं सुसमाहितः
सौवर्णमुखसंयुक्तं तेन भूमिं तु वाहयेत् १४
ततः समतलां कृत्वा सुधालेपेन लेपयेत्
सेचयेत् पंचगव्येन रक्तचंदनवारिणा १५
चंदनेन पुनर्लेपो रक्तेन तु विधियते
यथा न स्फुटते भूमिस्तथा कुर्यात् प्रयत्नतः १६
स्फुटिता दुषिता भूमिः क्वचिन्निम्ना दरिद्रता
उच्चता छिद्रिता चैव सर्वापदभिशसिनी १७
एवं समाहितां कृत्वा मनोह्लादकरीं शुभाम्
आप्तैः शुद्धैश्च शुचिभी रक्षां कुर्वीत यत्नतः १८
तस्याश्चोत्तरे पार्श्वेन कुर्याद् गुरुगृहं महत्
संभारसंभृतः शिष्यो गुरोरात्मानमर्पयेत् १९
विशुद्धकुलसंभूतं वेदवेदांगपारगम्
आत्मविद्यारतं दान्तं देवद्विजपरायणम् २०
अप्रव्रजितधर्माणं त्रयीमार्गव्यवस्थितम्

मानवं धर्मवेत्तारमग्रजन्माधिकालिकम्
गुरुमेवंविधं विद्याच्छिष्यं वक्ष्याम्यतः परम्  २१
गुरोर्गुणसमः शिष्यस्तस्य कार्ये व्यवस्थितः
चोदितो भक्तितत्वेन धर्मप्राप्तिफलं प्रति  २२
वर्जयेद्धीनजातींश्च नास्तिकानशुचीन्नरान्
देवद्विजं गुरूं वापि यश्च निन्दति सर्वदा  २३
सगुणा निर्गुणा वापि यस्य भक्तिः प्रतिष्ठिता
अनुग्राह्यः स गुरूणा नित्यभूतार्थकारिणा  २४
महाडणलवेत्ता तु ह्याचार्यो यत्र तिष्ठति
तत्र तिष्ठति देवोऽसौ लोकनाथो जगत्पतिः  २५
तत्र पुण्या जनपदाः प्रजाश्च निरूपद्रवाः
नारायणामधिपस्तत्र कृतकृत्यो महीपति  २६
ज्ञात्वा तु परमं ज्ञानं सर्वदीक्षा समन्वितः
सर्ववेदपवित्रश्च गृह्य धात्रात्मकः सदा  २७
अविकल्पं विकल्पं च योगं सर्वार्थसाधकम्
कन्याकर्तितसूत्रेण गर्तं तूलमयेन वा  २८
वर्त्तयेत् त्रिंवतं सूत्रं ग्रन्थिवेश विविर्जितम्
देवस्य त्वेतिमंत्रेण त्रिरादित्यं न वा पुनः
प्रोक्षयेत् त्रिवृतं सूत्रं ततः कर्म समाचरेत्  २९
हेमपात्रं प्रगृह्यादौ रौप्यमौदंबरं क्रमात्
अर्घं दत्वा दिगीशेभ्यो यथापूर्वं क्रमेण तु  ३०
मध्ये नारायणाख्याय सूर्याय परमात्मने
तेजोबुद्बुदरूपाय अर्घपात्रं निवेदयेत्  ३१
धूपमेवं क्रमेणैव बलिं चापि सुसंस्कृतम्
तिलांस्त्रिमधुरोपेतान् जुहुयात् कर्मसिद्धये  ३२
ऊं इंद्राय परमात्मने स्वाहा ॥  ऊं अग्नये शुचिष्मतेठः ठः ॥

यमाय धर्मात्मने ठः ठः ॥ ऊं वरुणाय सलिलात्मने ठः ठः ॥
ऊं ईशानाय ज्ञानात्मने ठः ठः ॥ ऊं पराय विह्महे तेजोरूपाय
धीमहि ॥
तन्नस्तेजः प्रचोदयात् ३३
महामंत्रमिमं पुरायं महामराडलसंभवम्
स्मरन्ति ये सदा राजंस्ते भवन्ति हितद्विजाः ३४
शरीरमराडस्येदं महामंत्रं प्रकीर्तितम्
तस्मान्महत्वमेवोक्तं मराडलस्य पुरातनैः ३५
कर्णिकाऽष्ठाङ्गुला प्रोक्ता केसरं तत्समं स्मृतम्
कर्णिका केशरैस्तुल्य यमस्य परिकीर्तिता ३६
पद्मतुल्यः स्मृतो द्वारः प्रकोष्ठो हस्ततुल्यकः
वीथिः प्रकोष्ठकैस्तुल्या स्थितिरेषा प्रकीर्तिता ३७
सितं रक्तं तथा पीतं हरितकृष्णमेव च
स्रालिखेन्मराडलं मंत्री गायत्र्या परिमंत्रितम् ३८
स्रष्टहस्तं समंतात्तु बाह्यतो मराडलाकृतिः
तदर्द्धेन पुनर्मध्यं षापीतुल्यं पुरं लिखेत् ३९
तन्मध्ये तु लिखेत्पद्मं पलद्वादशभूषितम्
मूर्तिद्वादशकं तेषु निविशेत्सु विधानवित् ४०
चतुरस्त्रं पुनः कृत्वा बाह्यतो रूपमालिखेत्
वज्रं शक्तिं च दराडं च खड्गं पाशं तथैव च
ध्वजं गदां त्रिशूलं च यथारूपं व्यवस्थितम् ४१
परो विश्वात्मकः शंभुर्नमस्कारो वषट्कृतः
संबुद्धो विश्वकर्त्ता च निष्कलो ज्ञानसंभवः ४२
मानोन्मानोमहान्सत्वो द्वादशैतेप्रकीर्तिताः
स्राधारभूताः सर्वस्य जगन्नाथाव्यवस्थिताः ४३
स्रभीषवे इदं विष्णुधामच्छन्दोमनोज्योतिश्चत्वारिंशृगास्ते

फाणाय अग्निमीडे ईषेत्वोर्ज्जे अग्नअायाहि शन्नोदेवीकृत्तिवासा-
ब्रह्मयज्ञानामिति यद्देवा द्वाद्वशा मूर्तयः ४४
मध्ये मूर्त्तिर्महाकाली कल्पिता च प्रबोधिनी
नीलाम्बरा घनस्था च अमृता च प्रकीर्तिता ४५
शुक्लो जयंतो विजयो नैकवर्णो हुताशनः
हुतार्चिर्व्यापकश्चैव अश्वाः सप्त प्रकीर्तिताः ४६
ॐ हरिणय स्वाहा इडा । ॐ विहारिरायैस्वाहा सुषुमा ।
ॐ आनदायै स्वाहा विदुः । ॐ भाविन्यै स्वाहा संज्ञा ।
ॐ मोहिन्यै स्वाहा प्रमदिनी ॥
ॐ ज्वालिन्यै स्वाहा प्रकर्षिणी । ॐ कल्पायै स्वाहा कल्पिका ॥
ॐ क्रुद्धायै स्वाहा प्रबोधिनी । ॐ मृत्यवे स्वाहा नीलाबरा ॥
ॐ हरायैस्वाहा घना ॥
ॐ द्रुमाय स्वाहा शुक्ला । ॐ शुद्धाय स्वाहा जयन्तः ॥
ॐ महाभोरणाय स्वाहा विजयः । ॐ चित्राय स्वाहा अनेकवर्णः॥
ॐ रुद्राय स्वाहा हुताशनः ॥
ॐ महाशिखाय स्वाहा व्यापकः ।
ॐ ज्वलितचराडलोचनाय स्वाहा अरुणोरथस्थाने ॥
एवमालिख्य विधिवन्मराडलं शास्त्रपूर्वकम् ।
पूर्वप्रतिष्ठितेवह्नै संस्कारं कारयेत्पुनः ४७
परिसमूहनं तलगाय स्या चपलेपनम्
शन्नो भवन्तु वनस्पदित्युल्लेखनविन्दुना ४८
अाद्याक्षरसंयुक्तेन अग्नेः स्थापनमुत्तमम् ।
तत्वमध्ये प्रणवो भवेत् ॥
कृत्वा वह्निक्रियामेतां यथावदनुपूर्यशः सुयजेर्वक्षीरसंयुक्तं
चरूद्वाद्वादश सज्ञितम् ।
सवृत्यार्धं गायत्र्या होमयेज्ञातवेदसम् ४९

यथोद्दिष्टेन मंत्रेण सूत्रान्प्रति जुहुयात् ।
होमान्ते प्राशनं कृत्वा गुरुदेवं प्रपूजयेत् ॥
पूजयित्वा विशेषेण विधानोक्तेन कर्मणा ५०
सह तेनैव विधिना प्राग्वंशे प्राग्समाहिते
प्रभाते कृत पुणया हौ द्वौ तौ व्रतपरायणौ ५१
मराडलालिखनं कुर्याद्यत्पूर्वमभिचोदितम्
वितानध्वजमालाभिः कलशैश्च विभूषितम् ५२
दर्पणैर्विमलैश्चैव छत्रैर्वस्त्रावगुंठितैः
योगैर्नानाविधैर्मध्यैसह वल्युपहारकैः ५३
पूजां कुर्वीत नियतो गुरुमंत्रपरायणः
कृत्वा कुशोत्तरां वेदीं चतुरंगुलमुच्छिताम् ५४
पश्चिमे मराडले द्वारे शिष्यं तत्राधिवासयेत्
द्रुपदा प्रथमं प्रोक्तमिदमापो द्वितीयकम् ५४
कर्तृभिर्द्देवताभ्यश्च भास्करार्धिस्त्रिभिः परैः
कृत्वाऽभिषेकं मंत्री तु पुनः कृत्वा प्रदक्षिणाम् ५६
प्रविष्टे मराडलं शिष्ये विन्यासं वै प्रकल्पयेत् ५७
ॐ अं शिरः ॐ आं हृदयम् ॐ इं नाभ्याम् ॐ ई ॐ चक्षुषि ॐ
ई ॐ नासियाम् ॐ फट् ॐ कर्णयोः ॐ हुं ॐ आस्ये ॐ क्षौ ॐ
जिह्वायाम् ॐ क्षां ॐ शिखायाम् ॐ क्षं ॐ सर्वगात्रेषु । न्यासमेवं
विधिं कृत्वा दापयेदष्टपुष्पिकम् ॐ भूतात्मने गोपतये स्वाहा पद्-
ममध्ये ॐ खद्योताय स्वाहा पूर्वतः ॐ ससत्याय स्वाहा स्वाहा
दक्षिणतः ॐ अमृताय स्वाहा पश्चिमतः ॐ वक्षस्तमाय स्वाहा
उत्तरतः ॐ अव्यक्ताय स्वाहा अग्नेय्याम् ॐ क्षपाय स्वाहा नैरृत्याम्
ॐ अक्षयाय स्वाहा वायव्याम् ॐ संधातिने स्वाहा ऐशान्याम्
अष्टमूर्त्तीनां चोदितैर्मंत्रैरश्मिभिस्समुदाहृतम् । एवं
कृतमंत्रन्यासमभिषिक्तं दीक्षा योगेन योजयेत् ॐ पावकाय शुचये

स्वाहा यज्ञोपवीतम् ॐ धर्मराजाय स्वाहा दराडकाष्टम् ॐ
दरुक्तदुरितपरिधानि स्वाहा मेखलाय ज्ञोपवीतं
काल्यमाविकत्वचोद्भवम् दराडकाष्टं पालाशमौदुबरं खादिरं च
दंडम् ।
मेखलादर्भमौंजी मौर्वी विल्वजा ।
ॐ सरस्वत्यै स्वाहा ॐ देदवत्यै स्वाहा ॐ चय्यवित्यै स्वाहा ॐ
सत्यवत्यै स्वाहा ध्रुवावत्यै स्वाहा ॐ स्वभावत्यै स्वाहा ॐ
प्रतिष्ठावत्यै स्वाहा एभिर्मंत्रैः समिद्धेऽग्नो उपविश्यघृताहुतयः
पाकयज्ञपात्रेण सप्ताहुतयः पूर्वोक्तमंत्रेण जुहुयात् ।
एवं कृत्वा विधानं तु शिष्यं गुरुरग्निकुराडाद्भस्मादाय पञ्चभिः
स्थानैर्मूर्ध्नालभेत् । ऊ चित्राय स्वाहा पूर्वमध्ये ऊ खमविष्णवे
स्वाहा सूर्वतः ऊ हिंसाय ठःठः दच्चिणतः । ऊ विदिताय ठःठः
पश्चिमतः ५८ ऊ लिखने ठःठः उत्तरतः । ऊ सभूतिने
सर्वगात्रेषु भस्मावकिरेत् । ऊ सोमवत्यै स्वाहा ऊ सुभगेठःठः ऊ
प्रेतवतिठःठः ऊ वाजिनवतिठःठ ।
कृतदीच्चाविधानस्य एता आहुतयो दिग्विदिति सुहोतव्याः होमांते
गुरवे गृहमेतत् सर्वोपकरणं दद्यात् तथा प्रार्थितं चेति ।
इति शाम्बपुराणे एकोन चात्वारिंशतमोऽध्यायः ३९

## चत्वारिंशत्तमोऽध्यायः

अतः परं प्रवच्यामि यज्ञस्थानविधिं शुभम्
अधियज्ञोऽस्ति यज्ञानां यज्ञङ्गो यज्ञ सभवः १
यज्ञमूर्तिं नमस्कृत्य त्वां यज्ञेन यजामहे
ज्वालामाला कुलप्रख्ये सर्वकारणसभवे २
विग्रहे देव देवस्य वर्णस्थानं निबोध मे
हृदये सिद्धिराद्यस्तु रवेः सकला निष्कला ३

कर्मनिर्वाणगा वै तावाकारौ परिकीर्तितौ
इह विद्येशयोगी तु शौनाभेस्तस्य बभूवतुः ४
उऊभावादिबीजे तु ऊरुभ्यां चास्य धीमतः
ऋऋृतं च सत्यं च पद्मां तस्य वभूवतुः ५
धर्मादिवर्गविपुलं लृकारं ग्रहणार्णवम्
एता देवस्य मातरौ श्लोके अं अः मद्व्योममूर्त्तिद्वौ ६
करवौस्यं नदमित्युक्तं गद्यौमराडलकीर्त्तितौ
ङकारः सारथिः साक्षाद् देवदेवस्य धीमतः ७
चकारे पितरो नित्यं छकारे देवदानवाः
जकारे च जगत् सर्वं झकारे बन्धनक्रिया ८
अस्य पातनसभूतिर्ञृकारः परिहासयेत्
टकारस्त्रोटयेत्पाशात्ठकारस्तिर्यगो भवेत् ९
डकारोऽनुग्रहस्थानं ढकारः क्रोध उच्यते
पकारा वालखिल्याद्या भृग्वाद्याश्च महातपाः १०
तकारे सिद्धगन्धर्वा स्थकारे पुरायसभवः
दमः प्रोक्तो दकारेण धकारो ब्रह्मगोचरः ११
नकारे सर्वतोऽनन्तः पकारोऽक्षर सभवः
फकारस्त्वशुभं हन्ति बकारेण शुभं स्मृतम् १२
भकारो भेदकः प्रोक्तो यकारः सरितापंतिः
यकारो ग्रहनक्षत्रा रेफः प्रोक्तः प्रदाहकः १३
लकारो विषयस्कारःथिकस्तु कस्तु भवोद्भवः
शकारः शोषयेद्दोषान् षकारो वीजमुच्यते १४
सकारे छन्दसां जन्म हकारे ब्रह्मशाश्वतम्
क्षत्रं परमनिर्वाणमभयं कामदं प्रभुम् १५
यत्तेदकाक्षरं ज्ञानं शान्तं सम्यक् प्रतिष्टितम्
क्षकारे क्षणं याति जगत्स्थावरं जंगमम् १६

अक्षयश्चाव्ययश्चैव क्षकारः परिपठ्यते
शुभा ह्येते तव प्रोक्ता बीजाः सूर्यस्य नित्यशः १७
यथाकर्मणि योगेन वर्णा ह्येते प्रकीर्तिताः
तथा फलप्रदाः सर्वे भवन्ति पर्युपासिताः १८
बृहद्बल उवाच
यदुक्तं वर्णजातीनां फलं कर्म समुद्भवम्
तन्न शक्यं समाख्यातुं चित्तेनास्थिरवृत्तिना १९
दीक्षावसाने साम्बस्य यदुक्तं भास्करेण तु
तन्मे ब्रूहि महामन्त्रं सर्वकामार्थसाधनम् २०
वसिष्ठ उवाच
शृणु राजन् महामन्त्रं भूतसंहारकारकम्
उत्पत्तिव्यञ्जकं चैव जगतश्च पराभवम् २१
भास्करं कर्णिकाभूतं व्यापकं पूर्वपश्चिमे
याम्ये सौम्ये तथा विष्णुर्ब्रह्मा ऐशान नर्ऋृते २२
रुद्रमाग्नेयवायव्ये पद्म एतत् प्रकीर्तितम्
चमत्कारकरं मन्त्रमुद्धतं साम्बकारणम् २३
ऊ उ ऊ हू जू दु दू ओं ऊ एतत्तुपरम गुह्यमेतत्तु परमं पदम्
एतत्तु परमं ज्ञानमेतत्तु परमं पदम् २४
व्यापकाभयसंयुक्तो यदा ह्यायुःप्रदो रविः
रुद्रयुक्तो व्याधिहरो धनदो विष्णुयोजितः २५
सर्वा संसाधयेदर्थान् योजितः परमेष्ठिना
आकाशमध्यपातालमञ्जनं रोचनादिकम् २६
रुद्रेणात्यन्तसंरुद्धः शत्रूणां भयंवर्द्धनः
विष्णुना स्तंभयेत्क्षिप्रं वाचं वाचस्पतेरपि २७
नव वर्णाः शरीरस्य भास्करास्त्रं च दुर्धरम्
षडङ्गं संप्रवक्ष्यामि तन्निबोध यथाक्रमम् २८

ॐ डुं हूँ हृदयाय नमः ॥
ॐ डुं ह्युं ॐ आशिरसि
ॐ ॐ हूं आं ह्यूं हं डं ॐ शिखायाम्
ॐ ओं ह्यूं ॐ कवचाय हुम्
ॐ हूं ॐ नेत्रे ॥
ॐ ह्यं नेत्रं ब्रह्मरुद्रौ विष्णुरुद्रस्तथैव च
हृदयं देवदेवस्य भास्करस्य जगत्पतेः २६
स्वयंभूर्व्यापको देवश्चान्ते चैव व्यवस्थितः
त्रैलोक्यस्य दसा पूज्यं शिरो देवस्य कीर्तितम् ३०
रुद्रो विष्णुस्तथा ब्रह्मा रवेराद्यन्तसंस्थिताः
दुःसप्तं दोहनीमेतां शिखामाहुर्दिवस्पतेः ३१
व्यापको विष्णुसहित आदित्यां ते व्यवस्थितः
कवचं सर्वविघ्नानां नाशनं देव निर्मितम् ३२
आद्यं तेऽवस्थितः सूर्यो ब्रह्माव्यापकमध्यतः
सृष्टिसंहारकर्त्ता च ह्यस्त्रमेतदुदाहृतम् ३३
नेत्रमेकं समुद्दिष्टमेतदक्षरमव्ययम्
युगान्तानलवर्णाभमनेकादित्यवर्चसम् ३४
एवं तद्भास्करं ज्ञेयं षड्विधं संप्रकोर्त्तितम्
पूर्वं द्वादशधा प्रोक्तमेतत् सूर्येण भाषितम् ३५
लक्षमेकैकमावर्त्यं नवागस्त्यानुपूर्वशः
तथैव मन्त्रे देवस्य पुनर्लक्षं समाहितः ३६
तिलांस्त्रिमधुरोपेतान् होमयेज्ञातवेदसम्
भास्करास्त्रेण जुहुयात् सायं सहविषा समम् ३७
होमावसाने च पुनर्वामभागो विधीयते
ततः कृतार्थतामेति साधको देवदर्शनात् ३८
त्रिकालवेदी तत्वज्ञो गुणत्रयविवर्जितः

प्राप्नुयात् परमं स्थानमनिलानलवर्जितम्  ३९
स एवं पूज्यते मंत्री देववद्भुवि मानवैः
त्राता स एव लोकानां व्याधिदुःखविनाशनः  ४०
अप्रमेयमिदं शास्त्रं पुराणं पूवचोदितम्
द्वापरे नारदेनैव पुनः साम्बाय भाषितम्  ४२
ततः प्रभृति लोकेषु प्रवृत्तं भास्करध्वजम्
सर्वपापहरं पुण्यं सर्वकामप्रदायकम्  ४२

इति श्री शाम्बपुराणे चत्वारिंशत्तमोऽध्यायः  ४०

## एकचत्वारिंशत्तमोऽध्यायः

वसिष्ठ उवाच
अतः परं तु दिव्यांस्तान् पूर्वान् प्रभृतिपूजयेत्
ॐ विकटाय ठः ठः ॐ वामनाय ठः ठः ॐ लंबोदराय ठः ठः
ॐ हेमगर्भाय ठः ठः ॐ भीमवेगाय ठः ठः ॐ सौम्यरूपाय ठः ठः
ॐ पञ्चात्मकाराय ठः ठः ॐ विदेहाय ठः ठः ॐ धर्मविग्रहाय ठः
ठः
ॐ अहिर्बुध्न्याय ठः ठः ॐ कालाय ठः ठः ॐ उपकालाय ठः ठः
ॐ पूर्वस्यां दिशि चैता पूजयित्वा पंचरूपकैः खेडाद्यैः प्रत्येकं
पात्रेण
बलिर्दातव्यः दक्षिणस्यां दिशि अधोराय ठः ठः ॐ बटुकाय ठः ठः
ॐ ऊर्ध्वरोमाय ठः ठ ॐ मृत्युहस्ताय ठः ठः मेघनादाय ठः ठः ॐ
कौस्तुभाय ठः ठः ॐ धूमकालाय ठः ठः ॐँ उग्रजिह्वाय ठः ठः ॐँ
मासमूर्तये ठः ठः ॐँ वल्कानने ठः ठः ॐँ दंडिने ठः ठः ॐँ कर्म-
साक्षिणे ठः ठ ॥ एतषां मत्स्यमांसधूलिकादिभिर्वलिर्दातव्यः ।
पश्चिमा-
यां दिशि ॐँ सूर्यमूर्त्तये ठः ठः ॐँ गुहाशयाय ठः ठः ॐँ टंकणा-

नाय ठः ठः ऊँ महाबलाय ठः ठः ऊँ वासुभद्राय ठः ठः ऊँ
पंचमूर्त्तये ठः ठः ऊँ अग्निपाशाय ठः ठः ऊँ पशुपतये ठः ठः ऊँ
महाश्राशाय ठः ठ ऊँ कृष्णदेहाय ठः ठः ऊँ अभोघाय ठः ठः ऊँ
अच्युताय ठः ठः एतेषां क्षारघृतपूर्णपात्रेण वलिर्दातव्यः । उत्तरतः
ऊँ
शिखिलिङ्गिने ठः ठः ऊँ योगेश्वराय ठः ठः ऊँ शिखाय ठः ठः ऊं
शतक्रतवे ठः ठः ऊं पंचशिखाय ठः ठः ऊं सहस्त्रकिरणाय ठः ठः
ऊं
सूवर्णकेतवे ठः ठः ऊं पद्मकेतवे ठः ठः ऊं यज्ञरूपाय ठः ठः ऊं
भुवनाधितये ठः ठः ॥
ऊं पद्मनाभाय ठः ठः एतेषां सुवर्णरजतवस्त्रैर्बलिदानम् १
एवं यः कुरूते राजन् पूजां शास्त्रप्रचोदिताम् २
तस्य सर्वे क्रियारम्भाः सकला प्रेत्य चेह च ३
नान्यच्छास्त्रं समुदिष्टं भानोः पूजानिवेदनम् ४
पुराणोक्तां मिमां राजन् सर्ववेदोपवृंहिताम् ५
ये केचिदन्यतन्त्रज्ञाः पूर्जा कुर्वन्ति मोहिताः ६
भक्ति श्रद्धां फलं तेषां न तु मंत्र कृतं भवेत् ७
मध्येत व्यमिदशास्त्रं सततं पापनाशनम् ८
आयुरारोग्यविजयं यशः कीर्तिकरं शुभम् ९
एतेषां दिग्पालानां पूजां कृत्वा पुनर्वक्ष्यमाणकैर्मन्त्रैः पञ्चपञ्चा-
हुतयः आज्येनैकैकं पायसेन वा ॥ ऊं शितिने ठः ठः विकटाय
ऊं अशितिने ठः ठः वामनः ऊं व्यवहिताय ठः ठः लम्बोदराय ऊं
संहताय ठः ठः हेमगर्भः ऊं सर्वगाय ठः ठः विदेहाय ऊं स्थिराय
ठः ठः घामवेगाय ऊं शान्ताय ठः ठः सौम्यरूपाय ऊं सर्वहराय
ठः ठः पंचात्मकाय ऊं अजरूपाय ठः ठः धर्मविग्रहाय ऊं निरभ्राय
ठः ठः अहिर्बुधन्याय ऊं मनवे ठः ठः कालाय ॥ किन्नराय ठः

ठः उपकालाय ॥ पूर्वदिशियोनिः ॥ ऊं संस्तुताय ठः ठः
अघोराय ऊं अनन्ताय ठः ठः वडवामुखाय ऊं क्रुद्धाय ठः ठः
ऊर्ध्वरोमाय ऊं समाय ठः ठः मृत्युहस्ताय ऊं अनन्तजिह्वाय ठः ठः
मेघनादाय ऊं स्फुरिताय ठः ठः कौस्तुभाय ऊं क्रूराय
ठः ठः धूमकालाय ऊं समोनवाढाय ठः ठः उग्र जिह्वाय ऊं
करभाय
ठः ठः मासमूर्यये ऊं अग्नेयाय ठः ठः वल्वली ऊं रक्तवर्णाय ठः
ठः दिणि ऊं सुरक्ताय ठः ठः कर्मसाक्षी ॥ दक्षिणादिग्भागिनः
सरस्वत्यै ठः ठः वायुभक्षः ऊं कारवे ठः ठः पञ्चमूर्त्तिः ऊं क्रीडने
ठः ठः अजिग्नषाशः ऊं विक्रीड ते ठः ठः पशुपतिः ऊं हन्ताय
ठः ठः महापाशः ऊं विहन्ताय ठः ठः कृष्णदेहः ऊं ध्रुवाय ठः ठः
अमोघः ऊं विशिखाय ठः ठः अच्युतः ॥ पश्चिमदिग्भागिनः ॥
ऊं सवित्रे ठः ठः शिखिलिङ्गः ऊं मध्यगताय ठः ठः ग्रन्थिवासः
ऊं युक्ताय ठः ठः योगवासः ऊं खड्गेने ठः ठः त्रिशिखः ऊं
ज्येष्ठाय
ठः ठः शतक्रतुः ऊं मध्यमताय ठः ठः पञ्चशिखः ऊं कनिष्ठाय
ठः ठः सहस्राकिरणः ॥ ऊं सर्वैरोग्याय ठः ठः पुद्लकेतुः ऊं
कातराय ठः ठः यज्ञरूपः ऊं युगाय ठः ठः भुवनाधिपः ऊं अनन्त-
शक्तये ठः ठः पद्मनाभः ॥ उत्तरतः १
वेदोद्धृतमिदं राजमन्त्रकाशं पुरातनम्
यजंस्त्रिकालमध्यग्रस्सर्वा कामान वाप्नुयात्
इदमेव परं ज्ञानं कर्मयोगं च निष्कलम्
इदं दत्तं मया तुभ्यं यथा साम्बाय भास्वते २
कृत्वा दिशां बलिं सम्यक् दिवपालानां समाहितः
होमं कृत्वा च तेनैव ततो ध्यानं विवस्वतः ३
एह्येहि देवाकृतशब्दमूर्त्तेसर्वैर्वृतो यागमिमं प्रपद्य

त्वमेव पूज्योऽसि सुरासुराणां धर्मादिवर्गस्य समीहकानाम् ४
ज्ञानं मन्त्रार्चितो भूयः कुसुमैश्चाविधानतः
गच्छ देवयथाकामं पुनरागमनाय च ५
इदमेव परं सत्यमिदमेव परं तपः
इदमेव परो देवः सुरासुरनमस्कृतः ६
पुराणोक्तमिदं शास्त्रं यः पठेत् प्रयतः शुचिः
ससहस्त्रार्चिषं देवं प्रविशेन्नात्र संशयः ७
तीर्थानां परमं तीर्थं मङ्गलानां च मङ्गलम्
पवित्राणां पवित्रं च श्रोतव्यं परमं पदम् ८
इति श्री शाम्बपुराणे दीक्षाविधानो नाम एकचत्वारिंशत्तमोऽध्यायः

## द्विचत्वारिंशत्तमोऽध्यायः

वशिष्ठ उवाच
कृत्वा देहगृहं सांबह्यानयित्वात्तु याजकान्
आजगामाथधर्मात्मा यत्र सन्निहितो रविः १
एते कुतवनं श्रुत्वा देवमानुषपन्नगाः
ऋषयः सिद्ध-विद्याद्या गन्धर्वोरगगुह्यकाः २
दिग्पाला लोकपालाश्च गुह्याक्षाश्च धार्मिकाः
सप्रजापतयः सर्वे गन्तुं प्रत्युपचक्रमुः ३
उपवासपराः केचित् केचिदात्मनि तत्पराः
त्रिवृताध्वराः केचित् केचिज्ञाप्यसमन्विताः ४
दारुपाकधराः केचित् केचित्सर्वार्थगामिनः
अपरे नियताहारा निरप्हारास्तथा हरेः ५
त्यक्त्वा देहं गतां चिन्तां रविध्यानपरायणाः
मासपक्षोपवासेन केचिल्लङ्घनमात्मनि ६
आचिरेणैव कालेन संप्राप्य लवणोदधिम्

दृष्ट्वा तपोवनं रम्यं लवणोदधिमाश्रितम् ७
नानापुष्पफलोपेतं देवगन्धर्वसेवितम्
ऋषयः पर्युपासन्ते क्रमं हित्वा ततः सदा ८
अपरो रविलोकस्तु सादृश्यात् कीर्तितो भुवि
सर्वे ते हर्षमापन्ना दृष्ट्वा रम्यं तपोवनम् ९
रमणं सर्वकार्येषु सर्वभूतोपकारकम्
सर्वप्राणिसुखावासं निर्मितं विश्वकर्मणा १०
वशिष्ठ उवाच
नारदोऽप्यथ शास्त्रं तत् सदा पठति बुद्धिमान्
साधु साम्ब महाभाग भक्तिमानसि यादव ११
येनेयमीदृशी या तु कुता त्वर्चा सनातनी
त्वत्प्रसादेन सावित्र्यं यत्पश्यामस्तपोवनम् १२
श्रुत्वा तं निर्मलं वाक्यं सांबः परमधर्मवान्
प्रणिधाय शिरो भूमौ देवं विज्ञापयत्ततः १३
यत्वयोदाहृतं पूर्वं सानिध्यं स्थानमुत्तमम्
ममैवानुग्रहाद्देव पूजानुग्रहकारिणा १४
अस्ति मे कृपया किंचिद्वद सौम्य विभावसौ
क्षीणगात्रेन्द्रिय प्राणो गिरा चाप्यतिमन्दया १५
ज्ञात्वा भक्त्यान्वितं साम्ब देवो वचनमब्रवीत्
त्यज पूर्वकीर्त्तिकृतां चिन्तां मत्स्थाने यदुनन्दन १६
पूर्वदत्तं मया वाचा प्रसादं शृणु यादव
अस्मिंल्लवणोदधेस्तीरे तापसाः पूर्वमानवाः १७
मत्प्रसादं च काङ्क्षन्तः विलष्टान्वर्षशतान्वहून्
तान् दृष्ट्वा तपसांतत्र कृपा मे विकृतां हृदि १८
ब्रूत वत्सायथान्यायं पयो वर्चो वलं बनम्
सत्यधर्म्मार्थयुक्तार्थान् प्रार्थयध्वमनुत्तमम् १९

श्रुत्वा ते निर्मलं वाक्यं देववक्त्राद्विनिः सृतम्
मानवा हर्षमापन्नाः संप्रहृष्टात्मसानसाः २०
यदि प्रसन्नो भगवान् वरं दातुं समुद्यतः
अविघ्नमस्तु नश्चैव त्वयिभक्तिर्विभावसौ २१
एवमस्त्विति सोऽप्युक्त्वा भगवान्दिनकृद्विभुः
अपरं प्रार्थयध्वं वै वरं वदत मानवाः २२
भूयस्तुष्टास्तु ते साम्ब सर्वधर्मपरायणाः
प्राथर्यन्ते परं श्रेष्ठं प्रहृष्टोत्फुल्ललोचनाः २३
मुनयः ऊचुः
यदि तुष्टो महातेजा वरं दातुं समुद्यतः
त्वप्रसादेन देवेशस्त्रष्टारोऽस्य भवामहे २४
वशिष्ठ उवाच
तत्प्रसन्नो महातेजाः पुनर्ववचनमब्रवीत्
एवं भवतु भूयोऽपि प्रजासग्रर्गं प्रकल्पयथ २५
अन्यच्छृणुत वक्ष्यामि कीर्त्तिकारणहेतुना
इदं तपोवनं रम्यं यदा स्थानमनुत्तमम् २६
श्रुत्वा तु निर्मलं वाक्यं ते वै प्राहुर्दिवाकरम्
त्वत्प्रसादेन चास्माकं देव यत्प्रीतिकारकम् २७
कीर्त्यर्थं प्रतिलप्स्यामो रोचयस्व दिवाकर
इदं स्थानं समासाद्य वयं तीर्णाः सुरप्राभो २८
प्रजानां च हितार्थाय ममैवानुग्रहाय च
अत्र कीर्तिं करिष्यामः प्रसादात्तवभास्करः २९
देव उवाच
दत्वा यूयं मम स्थानं सप्तद्वीपेषु दुर्लभम्
मन्वन्तरमथैकं च कीर्त्तिमन्तो भविष्यथ ३०
मंत्रसिद्धास्तु ये चान्ये मुनयश्च सुरोत्तमाः

ममस्थानरताः सर्वे तेनोर्ध्वं नैव भाषितम् ३१
नारद उवाच
एकोनविंशतिः शून्यैरूपै रेकावसानकैः
एतैः प्रमाणैर्वषाणां गणडको ब्रह्मणः स्मृतः ३२
गणडानां शतसाहस्त्रैर्मनुरेकः प्रकीर्तितः
याम्येन च पुरा कुर्यात्ततः स्वारोचिषेण च ३३
तृतीये मन्वन्तरे देवश्चतुर्थे कीर्त्तितो मनुः
पञ्चमे मन्वन्तरे सत्यः षष्ठे ऋतुश्च कीर्त्तिमान् ३४
सप्तमे सनत्कुमारत्तु कीर्त्तितं भुवनं रवेः
वैवस्वतेन मनुना वर्त्तमानेन कीर्त्तितम् ३५
अत ऊर्द्धं भवेच्छंभुः शम्भोरुर्द्धं महानसः
महानसाद्वसिष्ठश्च ततः कल्पः समाप्यते ३६
इति श्री शाम्बपुराणे यात्रानियमो नाम द्विचत्वारिंशत्तमोऽध्यायः

## त्रिचत्वारिंशत्तमोऽध्यायः

वसिष्ठ उवाच
तस्मिंस्तपोवने देशे तीरे तु लवणोदधेः
तिष्ठन्ति ये च सम्प्राप्ता देवदर्शन काङ्क्षिणः १
केचिद् ध्यायन्ति पूतात्मानः केचित्तद्गतमानसाः
यजन्ति हव्य सम्पन्नाश्चिन्तयन्त्यात्यष्सतत्पराः २
गायन्ति सिद्ध गन्धर्वा नृत्य त्यन्त्सरसां वराः
वीणा हस्ताश्च ये केचिदर्धं हस्तास्तथापरे ३
कृताञ्जलि पुताः केचित् केचिदानतमस्तकाः
योगिनो योगचित्ताश्च मुनयो यतमानसाः ४
ऋषयः ज्ञाति संयुक्ता देवास्तुन्वन्ति भास्करम्
यातुधानास्तथा यक्षाः सिद्धाश्चैव महोरगाः ५

दिक्पाला लोकपालाश्च ये च विघ्न विनायकाः
सर्वे भक्तिपरा भूत्वा तिष्ठन्ति सूर्यकानने ६
क्षीणगात्रेन्द्रियप्राणा देवाराधनतत्पराः
जागरीर्त्तिपराः क्लिष्टा अध्वभिः परिपीडिताः ७
स्तूयमानाःस्थिताः सर्वे भास्करोदय कांक्षिणाः
ततः प्रभात समये पद्मरागारूणप्रभे ८
विमला भूर्दिशः सर्वाः किरणोद्योतनै रवेः
स्तूयमानाः स्थिताः सर्वे भास्करोदय कांक्षिणः ९
रविरागारुणीभूत सागराकाशभूतलम्
तत्क्षणेनैव सर्वा सामैकज्वालात्वमागताः १०
तस्यामुदयबेलायां विवस्वद्वयैकमास्पदम्
बीक्ष्यमाणाद्भुतं रूपं विराजन्ते दिवाकरम् ११
दिविस्थं सागरस्थं च द्विविधं मंडलोद्यतम्
अपरा भगवन्मूर्तिर्जलमध्ये विराजते १२
सर्वे विस्मयमापन्ना दृष्ट्वा चाद्भुतदर्शनम्
मन वोबाहु संवाहैरवतीर्णा महोदधिम् १३
बाहुभिः संगृहीत्वा तु ध्यानयित्वा तपोवनम्
स्थापयित्वा विधानेन मनवो हृष्ट मानसाः १४
स्तोत्रैः स्तुवन्ति ते चित्रैः सांगोपांगैः सुसंमितैः
स्वंद्देव प्रलपः कालः क्षपः क्षांतः क्षपानलः १५
उद्भवः स्थितिसम्पत्तिः प्रजास्ते चांगसंभवाः
सोषवर्षहिमं धर्मप्रह्लाद सुखशीतलम् १६
त्वं देव ऋषिकर्त्ता च प्रकृतिः पुरुषः प्रभुः
छाया संज्ञा प्रतिष्ठापि निरालम्बो निराश्रयः १७
आश्रयः सर्वभूतानां नमस्तेस्तु सदा मम
त्वं देव सर्वतश्चक्षुः सर्वतः सर्वदा गतिः १८

सर्वदः सर्वदा सर्वः सर्वसेव्यस्त्वमार्त्तिहा
त्वंदेव ध्यानिनां ध्यानं योगिनां योग उत्तमः १९
त्वं भाषाफलदः सर्वः सद्यः पापहरो विभुः
सर्वार्त्तिनाशं नो नाशीकरणं करुणा प्रभुः २०
दयाशक्तिः क्षमावासः सघृणिर्घृणिमूर्त्तिमान्
त्वंदेव सृष्टि संहारस्थितिरूपः सुराधिपः २१
बकः शोषो वृकोदाहस्तुषारोदहनात्मकः
प्रणतार्त्तिहरो योगी योगमूर्ते नमोऽस्तुते २२
त्वं देव हृदयानंद शिरोरत्नप्रभामणिः
बोधकः पाठको ध्यायी ग्राहको ग्रहणात्मकः २३
त्वं देव नियमो न्यायी न्यायको न्यायवर्द्धनः
अनित्यो नियतो नित्योन्यायमूर्ते नमोऽस्तुते २४
त्वं देव त्रायसे प्राप्तान् पालयस्यर्पवस्थितान्
ऊर्द्ध्वत्राणार्दितांल्लोकांल्लोकचक्षुर्नमोऽस्तुते २५
दमनोऽसि त्वं दुर्दान्तः साध्यानां चैव साधकः
बन्धुः स्वबन्धुहीनानां नमस्ते बन्धुरूपिणे २६
कुरु शान्तिं दयावास प्रसीद जगतः पते
यदास्माभिर्हितं वाक्यमभीष्टं कीर्त्तितं प्रभो २७
एवं श्रुत्वा ततः सर्वे पप्रच्छुः प्रतिमां रवेः
केनेयं निर्मिता मूर्त्तिः केन त्वं प्रतिपादितः
कस्मादिहागतो देव संशयोऽत्र नियच्छतः २८
देव उवाच
तस्मिन् काले समादेशान्निर्मिता विश्वकर्मणा
सर्वलोकहितार्थाय ससुरैरर्चिता पुरा २९
तस्मिन् हिमवतः पृष्ठे कल्पवृक्षे निधापिता
तस्मात्तु चन्द्रभागायां प्रविष्टा स्थानकारणात् ३०

चन्द्रभागाया वै पार्श्वे वैपाशाच्च शतद्रवम्
शतद्रवाच्च विज्ञेया प्रविष्टा यमुनां नदीम्  ३१
यमुनातो जाह्नवीं चैवस मानीता शनैः शनैः
भागीरथी तो विज्ञेया मोदगङ्गा महानदी  ३२
ममैवानुग्रहेणासौ तीर्थानां प्रवरः स्मृतः
तस्माद्वै मोदगङ्गायाः प्रविष्टा लवणोदधिम्  ३३
साम्प्रतं च प्रवर्त्तध्वं स्थापनं मेमनूत्तमा
श्रुत्वा देवास्तु तद्वाक्यं निर्मलं प्रीतिवर्द्धनम्  ३४
प्राञ्चलिप्रणता भूता स्तूयमाना रविंस्थिता
ततो वैवस्वतः प्राज्ञः सर्वधर्मप्रणोदितः  ३५
काश्यामास विप्रात्तु विदुर्देवालयं शुभम्
स्थापयित्वा रविं भकत्या त्रि स्थानेषु सुरोत्तमाः  ३६
निवृत्तिं याति सुकृतो देवकार्यार्थतत्पराः
सर्वे दीक्षा पराभूत्वा भास्कराद्विधिकांक्षिणः  ३७
यतोऽधिमण्डलं कुर्युस्तद्गतैरन्तरात्मभिः
लिखितं मण्डलं दिव्यं यथोक्तं भास्करेण तु  ३८
यथाविधि समुद्दिष्टां क्रियां सौरिसमाश्रिताम्
विश्वकर्माभ्युनुज्ञाय सवर्णा मूर्द्धजाः प्रजाः  ३९
ततो नाम प्रकुर्वन्ति सम्प्रहृष्टतनुरूहाः
अनेन मुण्डिताः सर्वे तेन मुण्डित उच्यते  ४०
अथ कृतार्थसंज्ञाश्च निगमज्ञैरुदाहृताः
मुडिप्रमर्दने धातुः संज्ञायां च विधीयते
प्रकर्षादुर्दयेद्येन तेन मुण्डीर उच्यते  ४१
वशिष्ठ उवाच
एवमाद्यमिदं स्थानं कीर्त्यते च युगे युगे
सर्वपापहरं पुण्यं सर्वतीर्थमयं शुभम्  ४२

ये तु केचिन्नरा लोके भक्तियुक्तार्तिवेदकाः
तस्मिन् यत्ने समापन्नाः सद्यो मुञ्चन्ति वर्तिताः ४३
केचित्तत्र्महामोहादस्मिंस्तीर्थे विबुद्धयः
न तेषां संपदां स्थैर्यं यदि प्राप्तुं सुदुष्करम् ४४
यावत् प्रतपतेमानुर्यावच्च लवणोदधिः
यावद्भूमिधरा देवा स्तावत् कीर्त्तिर्विभावसोः ४५
ये च पापसमायुक्ता जायन्ते भुवि मानवाः
तेषामेव रविस्त्राता ये तत्क्षेत्रसमाश्रिताः ४६
एवंविधो ह्ययं सूर्यः सदा कार्यो विजानता
देवः कीर्त्तिधनाकांक्षी किं पुनर्भूवि मानवाः ४७
एतत्स्थानं सुरेशस्य सर्वैर्देवैरधिष्ठितम्
शान्ति पुष्टिं सुखं कामं सर्वभूतार्त्तिनाशनम् ४८
एतदेव हि सा कीर्त्तिः कीर्त्तिता मुनिभिः पुरा
अत्र पश्यन्ति ये भानुमुद्यन्तं मूर्त्तिसंस्थितम् ४९
तारयन्ति नराः पूता आत्मानं गोलवर्द्धनम्
यां यां क्रियां समारभेत् सूर्यक्षेत्रेषु मानवः ५०
तां तां सिद्धिमवाप्नोति इह लोके परत्र च
जम्बूद्वीपो महाद्वीपः कर्मभूमिरनुत्तमः ५१
यत्रेयमीदृशी कीर्त्ति देवेनैव प्रकीर्तिता
यत्र पश्येत् सहस्त्रांशुमित्यसौ शोध्यते जनैः ५२
एका मूर्त्तिर्द्विधा कृत्वा भूतलेष्ववतारिता
प्रत्यूषे चैव मुण्डीरं ये पश्यन्ति नराः सकृत् ५३
न कदाचिद् भयं शोको रोगस्तेषां प्रपद्यते
कालहतवत प्रीत्या च मध्याह्ने ये त्ववेक्षकाः ५४
तेषामेव सुखोदर्को ह्याचिरेणैव जायते
साम्बकृतपुरे भानुः सायाह्न यैरुदीक्षितः ५५

सद्यः संपद्यते तेषां धर्मकामार्थसाधनम्
एवं युक्तिं समाधाय सर्वधर्मपरायणाः
कीर्त्तयित्वा रवेः कीर्त्तिजग्मुः सूर्यालयं प्रति ५६
प्रजापतीनामिदमालयं रवेर्विधायितं देववरानुकंपितम्
विधातकास्तत्र पतन्त्यसाधवो वह्नेः शिखायां शलभा इवक्षणात्
५७

इति श्री शाम्बपुराणे त्रिचत्वारिंशोऽध्यायः ४३

## चतुश्चत्वारिंशत्तमोऽध्यायः

वसिष्ठ उवाच
स जयति सुरपतिनाथः करनिकरविनिहितसकलकलीलः
शाश्वतममलनयनमखिल भुवनभवनप्रदीपो रविः १
साम्ब उवाच
आचारः परमो धर्म इति धर्मविदोऽवदन्
आचाराद्वर्धते ह्यायुर्ह्याचारो हन्त्यलक्षणम् २
आचारान् सुखभागी स्यादाचाराच्छ्रियमश्नुते
अतस्तमहमाचारं श्रोतुमिच्छामि तत्वतः ३
आदित्यभक्तः पुरुषः कीदगाचारमाचरेत्
देवस्य प्रियतामेति श्रियमायुश्च विन्दति ४
नारद उवाच
अत्र ते संप्रवक्ष्यामि यन्मां त्वं परिपृच्छसि
आयुर्लक्ष्मी यशो हेतुः सूत्रमाचरणस्य यत् ५
नास्तिकेनाश्रद्दधानेन गुरुणा शस्त्रलंघिना
भिन्नमर्यादसंकीर्णं मैथुनेन वितव्ययम् ६
अतः अक्रोधेन सत्यवादिना भूतानामहिंसकेनानसूयुनाशुचिना
हिह्नेनानालस्येन भवितव्यम् ॥ अतोऽष्टमर्दनातृणच्छेदिनानख-

शोधिना नित्योच्छिष्ठेनाशेकमनसा सुवेशेन भाव्यम् ॥
ब्राह्मे मुहूर्त्त उत्थाय ग्रधर्मार्थसाधुचिन्तकः
ग्राचम्य संध्यां बन्देत पूर्वां च पश्चिमां तथा
ग्रादित्यमुद्यन्तमस्तंयान्तं वारिस्थमहर्मध्यमुपसृष्टं च नेन्नेत
परदारा न गन्तव्याः । वेशप्रसाधनदन्तधावनान्यदेवता पूजनानि
मध्याह्ने न कुर्वीत । मूत्रपुरीषे नाधितिष्ठेन्न च पश्यति उदक्यया
न प्रभाषेत ॥ ग्रामसमीपे कृष्टन्नेत्रे न च पुरीषयेत् ॥
विरामूत्रेनाप्सु-
कुर्यात् ॥ न भस्मनि नग्नो व्रजेन्न वा स्थिनि ॥ न प्राङ्गुखो न च
कुत्सितमन्नश्नीयात् ॥ भुक्त्वाग्निमालम्भयेत् सर्वप्राणान्पृशेत् ॥
केशभस्मकर्पासास्थिउद्वर्तनावरवता स्वेदादीनाधितिष्ठे ॥ शान्ति-
होमादीनि पवित्राणि कारयेत् ॥ न सुप्तं गच्छन्तं स्थविरं
प्रत्युत्थापयेत्
न सुप्तं गच्छन्तं वा उपस्थापयेत् ॥ ग्रार्द्रानार्द्रपादो भोजनशयने
नवाग्निब्राह्मणोच्छिष्टमालभेत् ॥ न पश्येच्चसूर्याचंद्रमसौ नन्नत्राणि
च न पश्येत् ॥ ग्रागच्छन्तं स्थविरं प्रत्युत्थायाभिवाद्यासनं दद्यात्
॥
गच्छन्तं पृष्ठतो नुयायात् ॥ भिन्नकांस्यासनं वर्जयेत् ॥
नैकवस्त्रोभुञ्जीत न नग्नः स्नायाच्छयीत नचोच्छिष्टः स्पृशेच्छिरः ॥
शिरसिकेशप्रहरणं परिहरेत् ॥ न पाणिद्वयेन शिरः कराडूयेत् ॥
नाभीन्दणं शिरसा स्नायात् ॥ न द्विः स्नायाच्च ॥ शिरः
स्नातस्तैलेनाङ्गं न किंचित्स्पृशेत् ॥ घृतंमधसमं विषम् ॥
मुद्गतिलान् भ्रष्टान्नाश्नीयात् ॥ उच्छिष्टो नाधीपीत् ॥
पूतिगन्धवाते च ॥ ग्रत्र गाथा यमेन गीता ॥
ग्रायुरस्य निकृन्तति प्रजा नास्या भवेत्तथा य उच्छिष्टः प्रपठति
स्वाध्यायं चाधिगच्छति सूर्यानिलानलसोमो

दकगोद्विजनक्षत्राभिमुखः पथि च न मेहेत् ॥ दिवा संध्य
सूदङ्मुखो दक्षिणामुखो रात्रौ तृणान्तिर्हितभूमौ अवगुह्य नीर्वीविणमूत्रे
कुर्यात् ॥ सामिषं श्राद्धं युस्काचन संध्यां वदेत् ॥
ब्राह्मणक्षत्रियसर्पान्नावमन्येत ॥ मिथ्यासत्याभ्यां गुरुणानुबंधः
कार्यो गुरं नापवादयेत् ॥
गुर्वपवादेकर्णौ पिघातव्यौ गंतव्यमन्यत्र वा दूरादावसथात्
मूत्रपादावसेचने स्पृष्ट्वा मार्जनानि कर्त्तव्यानि ॥ नाति
प्रातर्मध्याहने सायाह्नेषु गच्छेत् ॥ नैकोनाज्ञातैर्वृषलैः ॥ गो
ब्राह्मण क्षत्रियवृद्धभारतप्तगर्भिणीदुर्बलेभ्यः पन्था देयः ॥ धृतन्न
धारयेद्वलम्पादेनाक्रमते ॥ अष्टमी चतुर्दशी पूर्णिमामावास्यासु
ब्रह्मचारी भवेत् ॥ वृथामांसं भ्रष्टमांसं च न खादेत् ॥ आक्रोश
परिवाद पैशुन्यनृशंसाभिधानहीनोनारुंतुदः स्यात् हीनादुत्कृष्ठमपि
नाददीत ॥ पारमर्मदोषान्नवदेत् ॥ हीनातिरिक्तां
गरुपद्रविणज्ञातिसत्यहीननिंदितविगर्हितान्नाधिक्षिपेत् ॥
नास्तिक्यवेदनिंदाद्वेष दंभाभिमानतैक्ष्णया निवर्जयेत् ॥
परस्मिन्दंडणने न इच्छेत् ॥ क्रुद्धोऽपि न हन्यात् अन्यत्र भार्या
पुत्रदासदासीशिष्यभ्रातृभ्यः ॥ न ब्राह्मणपरिवादी न
तिथिनक्षत्रदेशिकः स्यात् ॥ कृत्वामूत्रपुरीषोशुचौरथ्यामाक्रम्यवा
पुनः पादौ प्रक्षालयेत् ॥ यावक कृसरमांसशष्कुली
पायसमात्मार्थ न कल्पयेत् ॥ अग्निपरिचारी नित्यं भिक्षां
दद्यात् ॥ वाग्यतः प्राङ्मुखोदन्तकाष्ठं प्रशस्तमद्यात् ॥ नाभ्युदितः
स्यात् ॥ प्रातरुत्थाय पितरमाचार्यमभिवादयेत् ॥ अकृत्वा
दन्तधावनं देवपूजाकार्यगमन समागमान्नाचरेत् ॥ अन्यत्र
गुरुवृधार्मिकेभ्यः समलो दिशो नावलोक्य उदवाश्चाच्छिरानशयीत
॥ अवाक् शिर उद्धर्व शिखश्चभग्नावशीर्णान्तद्धनि संयुक्तशयने
नतिर्यक् पदाकृष्यासनंप्रमृज्यनविशेत् ॥ सूर्यस्य पूजा कथां भक्तिं

कारयेत् तत्सर्वयमस्य प्राप्नोति धर्मम् ॥ नित्यं ब्राह्मणं भोजयेत् कथाकारिणं विशेषतः ॥ अन्यदेतेयदरवादेत्सर्वमपि ॥ निशायां न स्नायात् स्नात्वा गात्रं न मार्जयेत् ॥ स्नात्वा नानुलिपेत् ॥ नग्नात्वर्द्रवासातिष्ठेत् ॥ वासो नविधिनुयात् ॥ स्रजो नावकृष्टव्याः ॥ न वहिर्धार्याशिव ॥ रक्तमाल्यं न धार्य शुक्लं धार्यं तु अन्यत्र कमल कुवलयाम्लानासनेभ्यः ॥ स्नातस्य वर्णमांदद्यात् श्ववासविपर्ययं न कुर्यात् ॥ कटिवेशावपन्नमुद्धृतसारं नाश्नीयादन्यदैवावसनविदालशकमुदुंबरान्नादेत् ॥ अजागव्यमायूरशुष्कपर्युषितमांसं च ॥ न पाणौ लवणमादद्यात् ॥ श्वादव्यापदं स्पृष्ट्वाभूभ्रूणहेक्षिपतत अर्चलीणाघ्रातं च ॥ न रात्रौ भुंजीत् दधिसक्तून् ॥ श्वोकीसं च वर्जयेत् ॥ बालेन परपुत्रेण च ॥ शाकं प्रातश्च भुंजीतनांतरान समाहितः ॥ वाग्यतोनैकपात्रश्चनग्नोसंविशन्नशब्दकृत् ॥ शेषे न कस्यापि उदकपूर्वमन्नमतिथिभ्यो दत्वासमश्नीयात् ॥ एकपंवतौ गतानां चेद्दधिमधुसक्तुपायसपानीयं निरस्याश्नीयात् ॥ शेषं न कस्यचिद्दद्यात् । दध्यनुपानं शुक्लाशने न कार्यम् ॥

आचम्य चैकहस्तेन परिश्राव्यं तथोदकम्
अंगुष्ठे चरणस्याथ दक्षिणस्यावसेछनम् ७
पाणिं मूर्ध्नि समाधाय स्पृष्टवाग्निं सुसमाहितः
ज्ञातीनां श्रेष्ठतामेतिप्रयोगकुशलो नरः ८

आर्द्रपाणिना नाभिघ्राणं पाणितसाभिन्नस्पृशस्तिष्ठेत् ॥ ज्ञातीनां कथां दर्शनं संसागांश्च वर्जयेत् ॥ परापवादमप्रियवचनं न ब्रूयात् ॥ न कस्यचि मन्युमुत्पादयेत् ॥ न दिवा मैथुनं गच्छेत् ॥ कन्या-बंधकीमज्ञातां गर्भिणीं व्यंगां वृद्धां प्रव्रजितां परिव्रतीं वर्णोत्कृष्टांनि कृष्टवर्णां पिंगलां कुष्ठिनीं योगिनीं चित्रीणीं स्वकुलां ज्ञाति सम्बन्धहीनामपस्मारिणीं च वर्जयेत् ॥ अगम्यां न गच्छेत् ॥

राजसखि वैद्यबालवृद्धमृत्यु शरणागत सम्बन्धि ब्राह्मणीतदन्येषां स्त्रियं बन्ध्यं च च वर्जयेत् ॥ निष्ठीव्य क्षुत्वा नशचिर्भवेत् ॥ वृद्धो गतिरवशन्नोमित्राणिशुकसारिकाः । पारावताः पुण्यकृताः गेहे स्युस्तैलपायिकाः ।

सन्ध्यायां स्वाध्यायं भोजनं न च कुर्यात् ॥ न नक्तं पितृयाणि न प्रसाधनं न च पण्यक्रिया कदाचित्कार्या ॥ देवे पितृयस्वनक्षत्रे च शिरः स्नातोभवेत् ॥ नष्टष्ठपययो रग्निं दद्यात् ॥ प्रेतस्य सन्ध्यायां नोच्चरेत् प्रयत्नतः स्यात् ॥ इच्छामपि कुर्वता दारा रक्षयाः । भदिवास्वापः आयुषे पुरे निशायाश्च ॥ अवृतोयज्ञं न गच्छेदन्यत्र दर्शनात् ॥ नैको रात्रौ व्रजेत् ॥ अनागतायां पश्चिमसन्ध्यायां गृहमधिवसेत् ॥ मातृपितृवचनं हितमहितं पार्क्य्यमेव विचार्य्य ॥ धनुर्वेद हस्तिहयपृष्ठरथचर्य्यासु प्रयत्नः कार्य्यः । युक्तिशब्दकलागान्धर्वशास्त्रपुराणेतिहासाख्यानमाहात्म्यचरिताभिज्ञेन भवितव्यम् ॥ आदित्यव्रतं सप्तम्यां चरेत् ॥ गङ्गा पादेन न स्पृशेत् ॥ गोरज्जुं न लंघयेत् न्यासविश्वासहारिमधर्म्मोयमहतोगोब्राह्मणस्त्रीषु नसूरः स्यात् ॥ अकृतज्ञश्च । एको मिष्टं नाश्नीयात् । स्त्रीभ्यः स्त्रीबन्धुभ्यश्च वृत्तिं नाश्रयेत् ॥ अत्र गाथाः ॥

आक्रोशकसमालोके सुहृदन्यो न विद्यते
यस्तु दुष्कृतमादाय सुकृतेनाभिशंसति ९

कूटसाक्षी न भवेत् ॥ शरणागतं न परित्येजेत् । दानं न कीर्त्तयेत् । बल्वजानां दानेन कांस्यदोहनेन परवत्सेन च गौर्न दोग्धव्या ॥ पत्नीं रजस्वलां नाभिगच्छेत् । शुद्धस्नातां चतुर्थ्यां वा षोडशीसमविषमदिनेषु पुत्रैर्दुहितृकामो निर्विकारोऽधिशयीत । नाग्नावमेध्यं प्रक्षिपेत् ॥ न वर्षति धावेत् ॥ न च वातेनापवेत् ॥ अनिष्टानवसस्यंनाद्यत् ॥ शुक्ल

वस्त्रधारी स्यात् ॥ श्मश्रुकेशनखान्नदीर्घान्नबिभृयात् ॥ नोदके स्वरूपं पश्येत् ॥ नापः परिचक्षीत भार्यया सह नाश्नीयात् ॥ न तामीक्षेत् सुखा सीनामश्नंतींक्षवतींस्पृष्टमैथुनांजृंभमाणां च परस्त्रियं च नग्नाम् ॥ नाग्निंमुखेन धमेत् ॥ न पादौ प्रतापयेत् ॥
अधस्तान्नोपदध्यात् ॥ नैनं लंघयेत् ॥
न पादतः कुर्यात् ॥ न भूमिं प्रविलिखेत् ।
ष्ठीवनामेध्यलिप्तरुधिरवसास्थीनि न जले क्षिपेत् ॥ शून्यगृहे नैकः शयीत ॥ नचाग्निगुरुदेववद्विजपपतिधन्वध्ययनभोजनेषु दक्षिणपाणिमुद्धरेत् ॥ न वारयेद् गां
चरन्तीं परसस्य मादयन्तीं परस्मै नाचक्षीत् ॥ दिवीन्द्रायुधं दृष्ट्वा नकस्यचिद्दर्शयेत् ॥ अधार्मिकदेशे न वसेत् ॥ व्याधिबहुलो नैकोवीथीं प्रपद्येत ॥ पर्वते न चिरं वसेत् ॥ वृथा चेष्टामंजलिना जलपानमुत्संगेन भक्ष्यामक्षणं कुतूहलं त्यजेत् ॥
नृत्यगीतवादित्रास्फोटनाक्ष्वेलनानि च विरक्तोऽपि नेक्षेत ॥
कांस्य भाजनेन न पादं प्रक्षालयेत् पादेन च वदितश्वादिभिर्न व्रजेत् ॥ बालातपप्रेतधूनसंमार्जनीरजासिपरिहरेत् ॥ न द्यूतम् क्रीडेत् ॥ न स्वयमुपानहो हरेत् ॥ शयनस्थोनाश्नीयात् ॥ न पाणिस्थाने चासनेन बाहुभ्यां नदी प्रतरेत् ॥ न वृक्षामारोहेत् ॥ न संदिग्धां नावमारोहेत् । न कूपमवतरेत् ॥ न देव
द्विजगुरुराजस्नातकाचाय्यमैथुनवासः न च भुक्त्वा स्नायात् ॥
नातरौ न महानिशि ॥ नाविज्ञातेजलाशये ॥ न वासोभिरजस्त्रम् वैरीतत्साहायोधार्मिकतस्करोसेवापरिहर्त्तव्या ॥ सतीप्रियं सत्यं ब्रूयात् ॥ सत्यमप्रियं प्रैयमनृतं च न ब्रूयात् ॥ शुष्कवैरवचनं वर्जयेत् सर्वमङ्गलाचरणयुक्तः स्यात् ॥ सर्वगात्राणि न खानि नाभिपाणितलेन न स्पृशेदमन्त्रतः ॥ रहस्यानि रोमाणि वर्जयेत् ॥ देवद्विजोत्तमगुरून् सेवयेत् ॥ ईश्वरं च रक्षार्थम् ॥ परवशकर्म

जह्यात् ॥ आत्मवशं कुर्वीत सुखार्थी ॥
अन्तरालपरितोषकृद्धर्मिकः स्यात् ॥
अर्थकोमौधर्मविवर्जितौत्याज्यौ ॥
वाक्पाणिपादनेत्रचपलो न भवेत् ॥
परद्रोही चऋत्विकपुरोहिताचार्य मातुलातिथि साश्रितवृद्धबालातु-
रवैद्यज्ञातिसंबन्धिबांधवमातृपितृभार्यादुहितृभिर्विवादं न समाचरेत्॥
गोहिरण्यभूम्यश्ववासोन्नतिलघृतान्यविद्रान्नप्रमिगृह्णीयात् ॥
परकीयानिखातेषु न स्नायात् ॥ वापीं च सप्तपिंडानुद्धत्य ॥
नदीदेवखातप्रसवणेष स्नानं कुर्य्यात् ॥
क्रुद्धमन्दातुरप्रेष्यगणिकाविद्वज्जुगुप्सितं स्तेन
तक्षककवार्धुषिकगायककदर्मदीक्षिहम् ॥
निद्यवद्धाभिशस्तशठपुंश्चलीबन्दिचिकित्सकम् ॥
पूगान्न शूद्रोच्छिष्टशुष्कपर्युषितावक्षतुंनाद्यात् ॥
द्विषतश्चायुष्कामः सुवर्णकारान्नं परिहरेत् ॥ अनध्यायिनं वर्जयेत् ॥
वार्यन्नतिलदीपभूमिहिरण्यगृहवस्त्रगावश्च ॥
नेत्राधानसद्योध्तानाभयब्राह्मण यथाशक्तितो दद्यात् ॥
तृप्यतिशयसुखप्रजा च क्षुर्भूत्यापुरग्रवेश्मरूपचन्द्रसूर्यसालोवयेष्ट-
भार्याशाश्वतसर्वैश्वर्य ब्रह्मलोकावाप्तिकामः सूर्यनिमित्तछत्रोपानहौ च
दद्यात् ॥ उत्तमोत्तमसम्बन्धावित्तकुलोन्नतिकामः शयन
गृहकुशबन्धपुष्पादेकमणिदधिनामस्त्पयोमांसशाका निरत्निर्नुदेत् ॥
देवतातिथि गुरुभूत्यार्चनोद्धरणे कामः अध्यात्मज्ञाननिरतः स्यात् ॥
इति ते कीर्तितः साम्यगाचारः पुण्यलक्षणः
आयुर्लक्ष्मीयशोभूतिकारणं ब्रह्म निर्मितम् ११
आचारयुक्तः पुरुषः प्रेत्य चेह च मोदते
आचाराद्वर्द्धते ह्यायुराचारो हन्त्यलक्षणम् १२
दुराचारो हि पुरुषो लोके भवति निन्दितः

दुष्टभागी च सततं व्याधितोऽल्पायुरेव च  १३
तस्माद् भवेत् सदाचारः समुदाश्री रवेर्नरः
देवस्य प्रियतामेति लक्ष्मीं विन्दति निश्चलाम्  १४
इति श्री शाम्बपुराणे चतुश्चत्वारिंशत्तमोऽध्यायः  ४४

## पञ्च चत्वारिंशत्तमोऽध्यायः

साम्ब उवाच
इदमुक्तं त्वया ब्रह्म छत्रं सूर्येण निर्मितम्
उपानहौ च यो दद्याच्छक्रलोकं स गच्छति  १
एतदाचक्ष्व भगवान् कथं सूर्यविनिर्मितम्
छत्रपादुकयोर्दानमध्वतान्तर्हि जायते  २
नारद उवाच
एतत्ते संप्रवक्ष्यामि यथावृत्तमिदं पुरा
जमदग्नि विलशरा पुरा चिक्षेप भार्गवः  ३
तान् क्षिप्तान् रेणुका तस्य भानोर्जाज्वल्य तेजसः
आनीयासीददात्तस्य सा च शीघ्रमनिन्दिता  ४
अव्यक्तेन सुशब्देन ज्यातिलस्य शरस्य च
प्रहृष्टः सम्प्रचिक्षेप सा च प्रत्याजहार तम्  ५
ततो मध्याह्नमारूढे ज्येष्ठामूले दिवाकरे
सायकान्यान् द्विजः क्षिप्त्वा रेणुकामिदमब्रवीत्  ६
गच्छानय विशालाक्षि आनेतान्धनुश्चयुतान्
यावदेतान्पुनः सुभ्रु क्षिपामीति मुनिर्वदन्  ७
गच्छन्ती सा तुराच्छायां वार्क्षीमाश्रित्य भामिनी
तस्थौ सूर्यांशुसन्तप्तशिरः पादाम्बुजद्वया  ८
स्थित्वा तत्र मुहुर्त्तं सा भर्त्तुः शापभयाच्छुभा
गत्वादाय शरा भूयस्तस्मै दधाद्यशस्विनी  ९

स तामृषिश्च प्रस्विन्नां धियावेदितवेदनाम्
जगौ वचनमारुष्टः किंचिरेणागताह्यसि १०
रेणुकावाक्यमाहेदंचराडांशुकरपीडिता
शिरः पादम्प्रतप्तं मे सूर्यतेजोभिरुद्धतैः ११
हृन्नछायागता तस्माच्चित्ते मे तन्मया कृतम्
श्रुत्वैवं जमदग्निस्तु क्रुद्धः सूर्याय तापिने १२
स विस्फूर्ज्य धनुर्धीमान् गृहीत्वा सायकान् बहून्
अतिष्ठत् सूर्यमभितो यतो याति ततो सुखम् १३
द्विजरूपं समास्थाय सूर्योऽभ्येत्य वचोऽब्रवीत्
किमर्थं रूषितोऽसि त्वं किं ते सूर्योऽपराध्यति १४
आदत्ते रश्मिभिः सूर्यो जलं सर्वजगत्स्थितम्
आदाय स जलं देवो वर्षाकाले प्रवर्षति १५
ततोऽन्नं जायते विप्र मानुषाणां सुखावहम्
अन्नं प्राण इति प्रोक्तम् वेदे च परिपठ्यते १६
ततो लोकहितार्थाय रश्मिभिः परिवारितः
सप्तद्वीपानिमान् ब्रह्मा वर्षेणाभिप्रवर्षति १७
ततस्तदौषधीनां च वीरुधां पत्र पुष्पजम्
सर्वं वर्षाभिनिर्वृत्तमन्नं संभवति द्विज १८
भवन्ति जातकर्माणि व्रतोपनयनानि च
गोदान निवहाश्चैव तथापर्णसमृद्धयः १९
सत्राणि दानानि तथा संयोगाबीजसंचयाः
अनन्ताः संप्रवर्त्तन्ते यथा त्वं वेत्सि भार्गव २०
रमणीयानि यावन्ति वर्तन्ते यानि कानिचित्
तावन्त्यन्नत्संभवन्ति विदितं कीर्तयामि ते २१
सर्वं हि वेत्सि विप्र त्वं यदेतत् कीर्तितं मया
या चेत्त्वाहं भृगुश्रेष्ठ किं त्वं सूर्याय रूष्यति २२

एवं तदोच्यमानो वै भास्करेण महात्मना
जगदग्निर्महातेजा कैः कार्यैः प्रत्यपद्यता २३
ततस्स भगवान् देवो मुनिमग्निसमन्वितम्
सूर्यो मधुरया वाचा तमिदं पुनरब्रवीत् २४
चलं निमित्तं विप्रर्षे सदा सूर्यस्य गच्छतः
कथं चलं वेत्स्यसि त्वं सदा यान्तं दिवाकरम् २५
एवं ब्रुवाणं देव तं सूर्यं ब्राह्मणरूपिणम्
विज्ञाय ज्ञानयुक्तात्मा इदं वचनमब्रवीत् २६
स्थिरं रविं चलं वापि जानामि ज्ञानचक्षुषा
अवश्यं विनयाध्यानं कार्यमद्य त्वयाऽनघ २७
अपराह्णे निमेषं हि तिष्ठसि त्वं दिवाकर
तत्र वेत्स्यामि सूर्यं त्वां नास्ति मेऽत्र विचारणा २८
श्रीसूर्य उवाच
असंशयं मां विप्रर्षे वेत्स्यसि धन्विनां वर
उपकारिणं हि मां विद्धि भवतो गोचरं गतम् २९
तं सर्वलोकरक्षायै प्रवृत्तं मां दुरासदम्
दीप्तं रश्मिसहस्रेण ज्ञातवान् ज्ञानचक्षुषा ३०
ततः प्रहस्य भगवान् जमदग्निरूवाच ह
भास्करं प्रीतया दृष्ट्या दृष्ट्वा लोकप्रतापनम् ३१
तापस्यास्यापगमने समाधिं तु विचिन्तय
यथा सुखेन गमनं परमक्षय्यमेव च ३२
छत्रं द्विजातये दद्यात् स प्रेत्य तु सुखी भवेत्
न च किञ्चिदपि नाभिकार्यः सुरोत्तमः ३३
मद्गोचरगतश्चापि सर्वलोकहितप्रदः
ततः सूर्यो ददौ तस्मै छत्रोपानहमाशु वै ३४
उवाच स मुनिश्रेष्ठमिद वचनमुत्तमम्

महर्षे शिरसस्त्राणं छत्रं मद्रश्मिवारणम् ३५
प्रतिगृह्णीहि पश्चान्तु धारणार्थं च पादुके
अद्य प्रभृतिचैवास्मिंल्लोके संप्रचरिष्यति ३६
पुण्यकेष्वपि सर्गेषु परमक्षय्यमेव च
छत्रं द्विजाय यो दद्यात् स प्रेत्य सुखमेधते ३७
शक्रलोके च वसति ह्यप्सरोभिः समावृतः ३८
उपानहौ च यो दद्यात् श्लक्ष्णे स्नेहसमन्विते
गोलोके समुदायुक्तो वसति प्रेत्य मानवः ३९
एवमुक्त्वा तु भगवान् भास्करो लोकपावनः
शान्तयित्वा द्विजश्रेष्ठं तत्रैवान्तरधीयत ४०
मयापि ते यदुश्रेष्ठ कथितम् पुण्यवर्धनम्
छत्रपादुकयोर्दानं यथा सूर्येण भाषितम् ४१
इति श्री शाम्बपुराणे पञ्चचत्वारिंशत्तमोऽध्यायः ४५

## षट्चत्वारिंशत्तमोऽध्यायः

साम्ब उवाच
भगवञ्छ्रोतुमिच्छामि सप्तम्यास्तु विधिक्रमम्
सर्वासामनुपूर्वेण कथस्व महामुने १
नारद उवाच
शृणु सांब महाबाहो सप्तमीनां विधिं परम्
तमहं कीर्तयिष्यामि भवता यत् परिपृच्छ्यते २
तुभ्यं यदुकुलश्रेष्ठ यथा ख्यातम् विवस्वता
शुक्लपक्षे रविदिने प्रवृत्ते तूत्तरायणे ३
पुन्नामधेयनक्षत्रे गृह्णीयात् सप्तमी व्रतम्
ऋषिभिर्ज्ञानसंपन्नैः सर्वकामफलप्रदा ४
सप्तभ्यः सप्तकथितास्तासां नामानि मे शृणु

अर्कसंपुटकैरेका द्वितीया मारिचैस्तथा ५
तृतीया निंबपत्रैस्तु चतुर्थी फलसप्तमी
पंचम्यन्ता दिनीस्यात्तु षष्ठी विजयसप्तमी ६
सर्वासु ब्रह्मचारीस्याच्छौचयुवतो जितेन्द्रियः
सूर्यार्चनपरो दान्तो जलहोमसमन्वितः ७
पंचम्यामेव पुरुषः कुर्यान्निर्यासमात्मनः
षष्ठ्यां न मैथुनं गच्छेन् मधुमांसानि वर्जयेत् ८
अर्कसंपुटमेकैकं प्रथमायां विधानवित्
अन्यद्दत्तमभुञ्जानः सप्तम्यां भक्षयेन्नरः ९
एकैकवृद्धानि पुनर्मरिचानि च भक्षयेत्
तथैव निंबपत्राणि परमं व्रतमास्थितः १०
फलाख्यायां फलेनैव आमे नात्र विधीयते
अन्यदत्तं ओदनं तु नाश्नीयात् सुखदं भवेत् ११
अहोरात्रं वायुभक्षः कुर्याद्विजयसप्तमीम्
अथैकैकां सप्तमीं तु प्रतिपक्षे विचक्षणः १२
कृत्वा विधानकुशलस्पूजां कुर्वीत कामिकाम्
आसां लिखित्वा नामानि पत्रके पुटके पृथक् १३
तानि सर्वाणि पश्चानि प्रक्षिपेन्नव केधटे
तदर्थं यो न जानाति बालोवान्योऽपि वा नरः १४
तेनैवोद्धारयेदेकं तत्कुर्याद विचारयन्
तेनैव विधिना कुर्यात् पक्षे पक्षे विचक्षणः १५
सप्तैव मावत् संप्राप्ता सिज्ञेया सा तु कामिका
इत्येता सप्त सप्तम्यः स्वयं प्रोक्ता विवस्वता १६
कुर्वीत यो नरः सांब सर्वपापैः प्रमुच्यते
अर्कसंपुटकैर्वित्तं मरिचैः प्रियसंगमम् १७
निंबपत्रे रोगानाशं फलैः पुत्रान्यथेप्सितम्

धानधान्यमनोदन्यां विजये विजयं तथा १८
सर्वान् कामान् क्रमिकायां प्राप्नुन्नात्र संशयः
नरो वा यदिवा नारी यः कुर्यात् सप्तमीव्रतम् १९
ये करिष्यन्ति नितरां तेषां लोको विभावसोः
न तेषां त्रिषु लोकेषु किंचिदस्तीह दुर्लभम् २०
ये भक्ता लोकनाथस्य व्रतिनः संयतेन्द्रियाः
तत्फलं ते प्राप्नुवन्ति क्रतुभिर्भूरिदक्षिणैः २१
व्रतैरेवं विधैस्त्वन्यैस्तपोभिस्तु सुदुष्करैः
कर्मभिः शमनैर्वापि दानहोमजपैरपि २२
यत्फलं समवाप्नोति चारित्वा सप्तमीव्रतम्
सूर्यलोकेषु नियतं वासो नैवात्र संशयः २३
ब्रह्मेन्द्ररुद्रलोकेषु तस्याप्रतिहता गति
नान्धः कुष्ठी न च क्लीबो व्यंगो नापि च निर्द्धनः २४
कुले तस्य भवेत् कश्चिद्यश्चरेत् सप्तमीव्रतम्
नारी हस्त्यश्वयाना विविधानां च वाससाम् २५
ध्रुवं सभाजनं साम्ब यश्चरेत् सप्तमीव्रतम्
विद्यार्थी लभते विद्यां धनार्थी धनमाप्नुयात् २६
भार्यार्थी रूपसंपन्नां लभेद् भार्याकुलोम्भवाम्
पुत्रार्थी श्रुतसंपन्नांल्लभेतपुत्रांश्चिरायुषः २७
भोगार्थी लभते भोगान् व्रतेनानेन यादव
मोहात् प्रमादाल्लोभाद्वा व्रत भंगं समाचरेत् २८
त्रिरात्रं न तु भुंजीत कुर्याद्वा वेशमुंडनम्
प्रायश्चित्तमिदं कृत्वा पुनरेव व्रतो भवेत् २९
सप्तैव यावत् संप्राप्ताः सप्तभ्यः सप्तसद्गुणाः
अभ्यर्च्य सूर्यं सप्तम्यां माल्यधूपादिभिर्न्नरः ३०
भोजयित्वा द्विजान् भवत्क्या प्राप्नुयात् स्वर्गमक्षयम्

सप्तम्यां विप्रमुख्येभ्यो वस्तु यद्यत् प्रयच्छति ३१
तत्तदक्षयमाप्नोति सूर्यलोकं च गच्छति
इति ते कीर्तितः सांब सप्तम्या विधिरुत्तमः ३२
भूय एवाभिधानस्य शृणुष्वैकाग्रमानसः
यः कुर्याद्गोमयाहारः शुक्ला द्वादशसप्तमी ३३
अथवा यवकाहारः शीर्णपत्राशनोऽथवा
क्षीराशी चैक भक्तो वा भिक्षाहारोऽथवा पुनः ३४
जलाहारो पि वा विद्वान् पूजयित्वा दिवाकरम्
पुष्पोपहारैर्विविधैः सुमनोहरैः ३५
नानाप्रकारैर्गन्धैश्च धूपैर्गुग्गुलचन्दनैः
कृसरै पायसान्नाद्यैर्विविधैश्च विभूषणैः ३६
अर्चयित्वा द्विजाच्छ्रेष्ठान्हिरण्यान्तादिभिर्नरः
स नूनं फलमवस्नोति तच्छृणुष्व समाहितः ३७
काञ्चनेन विमानेन मनोमारुतरंहसा
वैडूर्यमणिरत्नेन किंकिणी जालमालिना ३८
कुंडलांगदभूषाढ्यैर्गायमानोऽप्सरोगणैः
विचित्रमालाभरणैः स याति सूर्यलोकताम् ३९
तपसोऽन्ते पुनः सांब कुले महति जायते
एवं यजेद्विवस्वन्तं प्रतिमांसं समाहितः ४०
यथाक्रमं प्रयत्नेन नामानि परिकीर्तयेत्
मधौ मासे विष्णुरिति माधवे सूर्वर्यमेति च ४१
शुक्रे विवस्वानिति च शुचौ मासे शुभानिति
पर्जन्यः श्रावणमासि नभस्ये वरुणस्तथा ४२
इषेत्विन्द्रीरतिज्ञेय ऊर्जे धातेति वा पुनः
मार्गशीर्षे मित्र इति पौषे पूषेति कीर्यते ४३
माघमासे भग इति त्वष्टा इत्येव फाल्गुने

एवं क्रमेण तीक्ष्णांशुनामभिः परिपूजयेत्  ४४
पुष्पार्चनविधानेन सप्तम्यां सुसमाहितः
नैतद् देयमशिष्याय नाभक्ताय च भास्वतः  ४५
न च पापकृते सांब देयं नैवावयसूयके
पठेद्यश्चापि नियतो विधिन तं नरः सदा
इह लोके सुखं प्राप्य सूर्यलोके महीयते  ४६
इति श्री शाम्बपुराणे सप्तमीकल्पे षट्चत्वारिंशत्तमोऽध्यायः  ४६

## सप्तचत्वारिंशत्तमोऽध्यायः

नारद उवाच
अतः परं प्रवक्ष्यामि जपयज्ञविधिक्रमम्
यैर्यैतैःसर्वथा चैव कर्तव्यः कथयामि ते  १
सर्वेषामेव यज्ञानां जपयज्ञो विशिष्यते
कृतेन विधिनानेन प्रीतो भवति भास्करः  २
यदन्यत् कुरुते कर्म यदि वा न करोति च
कृतेन जपयज्ञेन परां सिद्धिमवाप्नुयात्  ३
महद्भिः पातकैर्युक्ता ये चान्ये कार्यकारिणः
खरवोल्क जाप्यान्मुच्यन्ते सर्वे तैस्तैस्तु पातकैः  ४
जप्यं जपन्तः संन्यासं कुर्वन्ति सुसमाहिताः
असुरास्तं हिंसन्ति चान्यथा दष्टचेतसः  ५
प्रवालहेममुक्ताभिर्मणि-रुद्राक्षपुष्करैः
दर्भारिष्टकजीवैश्च शंखेन च रविं यजेत्  ६
शब्दकायमनो वृत्या स चापि त्रिविधः स्मृतः
शतं सहस्रमयुतं तस्यापि त्रिविधं फलम्  ७
लक्षार्द्धं चैव मणिना रुद्राक्षेणायुतं स्मृतम्
पुष्करेणाष्टसाहस्रं दर्भैश्चैव तदर्धकम्  ८

जपे कृते प्रवालेन फलमानन्त्यमुच्यते
हेम्ना कोटिगुणं प्रोक्तं लक्षं मुक्तापलैः स्मृतम् ९
अरिष्टाक्षाज्जपात्तस्य फलं साहस्रकं भवेत्
शतानि जीवकैः पंचशंखे शतगुणं भवेत् १०
जपं कुर्वन् यदि ष्ठीवेज्जल्पे दुर्ज्जृंभते पि वा
आचमेद् भुवि विन्यस्यअम्भोऽदं गोमयेऽपिवा ११
अक्षसूत्रं निपतेद् भूमौ चेत्कुर्वतो जपम्
उद्धारं तस्य कुर्वीत जापको हृदयेन तु १२
दक्षिणाङ्गुष्ठमध्याग्रे अष्टमेकैक माहृतः
प्रत्येकमानुपूर्वेण कर्षयन् जपमारभेत् १३
शतमष्टाधिकं चैव चतुः पंचाशदेव च
सप्तविंशति संख्या वा अक्षसंख्योपदिश्यते १४
जपं कुर्वन्न कुर्वीत संख्या ग्रन्थकसंधनम्
कृते जपं जपः स्यात्तु कृतेऽष्टौ च शतं जपेत् १५
विष्टो चोपविष्टश्च जपं कुर्याद् वेद नः
देवस्याभिमुखी भूत्वा संयतेनान्तरात्मना १६
ग्रहोपरागे संप्राप्ते मेघाशानि समुद्भवे
दुःस्वप्ने सागरोत्तारे समयालापभेदने १७
उत्पातानिष्टसंप्राप्ते महापातकभाषिते
जपेन्मन्त्री च सावित्र्याः शतमष्टाधिकं शुचिः १८
एवं संक्षेपतः प्रोक्तः पुण्यो जपविधिर्यथा
मुद्राणां लक्षणं तस्य इदानीं कथयामि ते १९
इति श्री शाम्बपुराणे जपविधिर्नाम सप्तचत्वारिंशत्तमोऽध्यायः ४४

## अष्टचत्वारिंशत्तमोऽध्यायः

नारद उवाच

मुद्राणां लक्षणं सम्यगिदानीं कथयामि ते १
देव उवाच
करं शिखासु विन्यस्य अरुणादीन् यथाक्रमम्
विजयं वामूल मन्त्रंमुद्राबंधं समाचरेत् २
लग्नस्य पृष्ठमध्यास्ये ईषद्भुप्ते तु तर्जनी
तिर्यग्विन्यसेदङ्गुष्ठे शिरः कां ते त्वनायिके ३
कनिष्ठिके समे तुङ्गे पृष्ठलग्ने उभे अपि
एषा विश्वात्मनो मुद्रा रथस्य परीकीर्तिताः ४
मध्यमानामिकानां च संपुष्टाङ्गुष्ठयोर्द्वयोः
कुर्वीत शेषानुत्तुंगान् मुद्रेयं वाजिनां स्मृता ५
फणिभोगनिभाः कार्याः सव्यदक्षिणहस्ततः
चक्रं बलात्तत्तलांतुल्यो करयार्भग्नभूलयोः ६
पृष्ठलग्नौ करौ कृत्वा प्रगुणे तर्जनीसमे
कनिष्ठके क्रोडलग्ने अंगुष्ठौ तु समौयतौ ७
शिखाश्चलास्तु कुटिलास्संक्रोडाभिमुखागता
इयं मुद्रा समुद्दिष्टा ह्यरुणस्य विधानतः ८
अष्टौ रणौ रवीन्द्रौ च लग्नान्यङ्गानि पूर्वगौ
अरुणेन्द्रौ रविस्त्वाष्टा एता मुद्राः पृथक् पृथक् ९
नैवान्योन्यलग्नाः स्युः शेषायामक्रियाः स्मृताः
यमसूर्योभिथः श्लिष्टावंशुमत्स्वर्ण देवता १०
ऊर्ध्वगौरविधातारौ युताबिन्दुगभस्तिनौ
यमस्य मूललग्नौ तो तथात्वष्टारुणा वुभौ ११
अन्तस्तु सूर्यारुणयोर्लग्नस्त्वष्टात्वधोमुखः १२
वाममुष्टौ सदालग्नौ शेषाः शिरः उदाहृताः
अन्योन्यं तर्जनीम्रातं गेष्ठौ च तद्युतौ १३
अन्योन्यं रन्त्रगाः श्लिष्टाः शेषभग्नाः शिखाः स्मृताः

अन्योन्यान च संलग्ना दिवसं वा वरुणादयः १४
करमूलपृथग्भूता नेत्रा नेत्रा कृतिः स्मृताः
उत्तानवाहमस्ते तु दृष्टं कृत्वा ह्यधोमुखम् १५
अंगुष्ठे तर्जनी लग्ने प्रगुणे करमूलयोः
अन्योन्यक्रोडसंसग्नाह्यर्चाः शेषाः संकुचिताः १६
मुद्रा कवचसंज्ञेयं मया वः परिकीर्तिता
रविन्दू मूलादारभ्य ऊर्ध्वं त्वट्रुणावुभौ १७
स्पृशेदग्रान्नतान्सर्वान्नतांश्चैव समाक्षिपेत्
कुंचितानामिकाग्रं च ह्यंगुष्ठाग्रेण योजयेत् १८
कुर्याच्छेषान् समुत्तुंगान् वसुमुद्रा उदीरिताः
अधोमुखे वामकरे कृत्तोत्तानं तु दक्षिणम् १९
अरुणोरविरिन्द्रश्च चन्द्रस्वत्वष्टा रमा क्रमेत्
यमांशुभत्तावुंत्तुंगे गुल्फौ क्रोडेन संगतौ २०
अन्योन्यं रंघ्रनिर्याताः शेषाः शिलष्टाश्च कुंचिताः
कृत्वा दक्षिणहस्तस्य तथाङ्गुष्ठं समुन्नतम् २१
योधा वै करतले चैव चत्वारो दंड उच्यते
शवत्याप्येवं प्रकुर्वीत ससूर्यैं स्वर्णरेतसम् २२
कम्नतुगं समाख्याता खङ्गमुद्रा विधानतः
अरूणास्यं नसं स्पृश्य सूर्यास्येन तु कुंचितम् २३
वामहस्तगता भुग्नं कृत्वा करतले रविम्
वामपाणिप्रकोष्ठं च संस्पृशेत्स्वर्णरेतसा २४
त्वाष्टास्ये दक्षिणा शेषा नीलास्याश स उच्यते
शक्तिं वामनतामीयात्कुर्वन्नकुंश उच्यते २५
ईषत्तु कुंचिताग्रस्य स्वस्थौदक्षिणसस्तगाः
पतितौ यतधातारौ पृष्ठलग्नौ समुत्थितौ २६
क्रोडलग्नौ समुत्तंगौ शेषाः षट्त्रिंश उच्यते

तवष्टारुणौ न चोत्ताने खीं द्रौत्रगतमस्तकौ २७
यमस्तथैव सूर्येण अंशुमान्स्वर्ण रेतसा
उभौ गभस्तिधातरौ पृष्ठ लग्नौ समुच्छितौ २८
मुद्रा व्योम शिखा नाम कथितेयं विधानतः
एतन्मया समुदिष्टं मुद्राणां लक्षणं शुभम् २९
येन सम्यक् प्रयुक्तेन परां सिद्धिमवाप्नुयात् ३०
इति श्री शाम्बपुराने मुद्रालक्षणं नाम अष्टचत्वारिंशत्तमोऽध्याय ४८

## ऊनपञ्चाशत्तमोऽध्यायः

नारद उवाच
शौचं स्नानं करन्यासं रवीकरणाह्निकम्
योगज्ञानं विशेषेण तस्य च शृणु देवताः १
दीक्षितायार्कभक्त्या श्रद्धानाय धीमते
कथनीयमिदं शास्त्रं सद्यः सर्वार्थसाधनम् २
मुचौ देशे समासीनः कुर्यादाचभ्यकं विधिम्
कृत्वावगुंठनं मौनी कुर्वन्नभिमुखः स्थितः ३
समृज्जलाभ्यां शौचं तु कुर्वति प्रागुदङ्मुखः
भताग्निदिग्वारणैश्चह्यधः पादमुदादितः ४
करान्तरिततोयेन कार्यं पादावने जनम्
मृत्पूर्वकं तथा पार्णि प्रक्षल्यान्त कोष्ठतः ५
उपवीती जलं प्राश्य बह्नितीर्थेन वापिवेत्
हृदमद्भिर्वचन मृद्यखानि सर्वाण्युपस्दृशेत् ६
भूयोऽर्कधर्महृदयैः त्रिः प्रास्म्याथ जलं पिबेत्
शिरश्चवदनं मृज्य शिखाग्रान् खान्युपस्मृशेत् ७
फेनबुद्बुक्तेन नीरेण शुचिना सदा
अङ्गुष्ठेनैव वामेन ऐन्द्यां सौभ्यां व्यवस्थितः ४

इति श्रीशांबपुराणे ऊनपंचाशत्तमोऽध्यायः ४९

## पञ्चाशत्तमोऽध्यायः

अतः परं प्रवक्ष्यामि पूजापिण्डप्रणोदिताम्
मन्त्रमुद्रादियोगेन वाञ्छितार्थफलप्रदाम् १
मूलमन्त्रोद्भवान् बीजान्विन्यस्यांगुष्ठतः क्रमात्
अंगेषु चांग मन्त्रैस्तु संयोगश्चात्ममुद्रया २
ॐ विश्वात्मने नमः ॥ रथस्य ॥ ऊं हरिभ्यो नमः अश्वानाम्
ऊं सर्पाय नमः वासुकेः ॥ ऊं भिनाभये नमः चक्रस्य ॥ ऊं
अरुणाय नमः अरुनस्य ॥ ऊं ऋत्विग्विधात्रे नमः पक्षस्य ॥ ऊं
आदित्याय हेममिहिरागच्छागच्छस्ववर्गेह्रस्व ठः ठः ॥ स वाहन
मन्त्र उषषोल्काय ठः ठः मूलमन्त्रः ॥ ऊं व्योम व्यापिने
सर्वलोकाधिपतये तिष्ठ ठः ठः स्थावनमन्त्रः ॥ ऊं अर्काय ठः ठः
हृदयम् । ऊं प्रदीप्ताय ठः ठः शिरः ॥ विपिटये ठः ठः शिखाम्
॥ ऊं जगच्चक्षुषे ठः ठः नेत्रम् ॥ ऊं प्रभाकराय ठः ठः कवचम्
॥ ऊं महातेजसे हुं फट् अस्त्रम् ॥ ऊं गणाधिपतये
सहस्त्रकिरणाय संरोधात्मने ठः ठः संरोधनमन्त्रः ऊं आकाश
विकासिने जगच्चक्षुषे सान्निध्यं कुरुकुरु ठः ठः सन्निधानमन्त्रः ॥
ऊं हूँरिटिचिरिंटयेदीप्ताशवे नमः पाद्यमन्त्रः ओंगभस्तिने केमि
किलिकालिकालिसर्वार्द्धसाधनं ककिककिहं नमः अर्धमन्त्रः ॥
सवित्रे वरुणाय नमः स्नानमन्त्रः ऊं षषनेत्राय सहस्त्रहस्ततनवे नमः
वस्त्रमन्त्रः ॥ ऊं पिंगलाय अच्छच्छले नमः गन्धम् ॥ ऊं अहि
अहि लिहि लिहि हियमाला धरतेजोधिपत्तये नमः पुण्यमन्त्रः ॥
ऊं ज्वलितार्काय नमः धूपमन्त्रः ॥ ऊं मिहिराय चित्रधरिणे नमः
॥ ऊं अंगेभ्यो नमः ऊं महाश्वेतायै नभः दण्डपाणये नमः ॥ ऊं
अरुणादेव्यै नमः ॥ ऊं पिंगलायै नमः ॥ ऊं अरुणादिभ्यो हुं

नमः ॥ हरिकेशादि रश्मिपतिभ्यो नमः ॥ ऊं
पुंजिकस्थल्याद्यप्सरोभ्यो नमः ऊं दीप्ताननादिकिरणेभ्यो नमः ॥
ऊं क्षुपादिभूतमातृभ्यो नमः ॥ ऊं ग्रहेभ्यो हुं नमः ॥ ऊं
दिग्देवेभ्यो नमः ॥ ऊं तेजोधिपतये नमः ॥ दीपमन्त्रः ॥
अकार्यगृहाणामृतेनमः ॥ नैवेद्यमन्त्रः ॥ ऊं जलकुंदलाय
दिव्यातोद्यभिप्रियाय नमः ॥ अतोऽर्घ मन्त्रः ॥ ऊं सुषोल्काय ठः
ठः ऊं अंशुमते देवाय यगोपतये ठः ठः ॥ जपन्यासमन्त्रः ॥ ऊं
नमस्तेदिव्यरूपाय सर्वभूतात्मने नमः ॥ सर्व तेजोधिपतये भानवे
लोकचक्षुषे । नमः स्तोत्र विधानेन तेजः पिण्डपदेदिमे
अग्निक्रियां प्रकुर्वीतसद्यः सर्वार्थसाधिनीम् ॥
ऊं संहर संहर विरोचन ठः ठः सहारमन्त्रः ॥ ऊं शान्तत्मने
सर्वलोकप्रियाय ठः ठः ॥ शुत्रिमंत्रः ॥ खरखोल्कायविद्महेस-
हस्रकिरणाय धीमहि ॥ तन्नोरविः प्रचोदयात् ठः ठः नमस्कार-
मन्त्रः ॥ अर्कहृदये नदानम् ॥ गच्छ गच्छ स्ववर्गेण
द्वादशादित्यविग्रहः ॥ ऊं हिलिहिलिगच्छदेवयथागतं स्वाहा ॥
विसर्जनमन्त्रः ॥ ऊं चण्डपिङ्गलाय ठः ठः ॥ विहार मन्त्रः
पदपिंडविधानेन पूजा निगदिता परा
युक्तियुक्तिप्रदा पुण्या बलारोग्यप्रदा सदा
द्वितीयपिण्डपूजाविधानम् ।
पदेन पदपिण्डेन उक्तः पूजाविधिर्मया
संक्षेण परं दैवं कथ्यमानं निबोध मे ॥
ऊं अर्काय ठः ठः ॥ हृदयम् ॥ ऊं दीप्ताय ठः ठः शिरः ॥
ऊं चिपिठये ठः ठः शीर्ष ॥ जगच्चक्षुषे ठः ठः नेत्रम् ॥ ऊं
प्रभाकराय हुं ठः ठः क्वचम् ॥ ऊं महातेजसे हुं फट् अस्त्रम्
ऊं देवीगभ्यो नमः ॥ ऊं महाश्वेता दिभ्यो नमः ॥ ऊं अरुणा-
दिभ्यो हुं नमः ॥ ऊं हरिकेशादिभ्यो नमः ॥ ऊं पुंजिकस्थल्या-

दिभ्यो नमः ॥ ऊं गणाधिपेभ्यो नमः ॥ ऊं छायादिभ्यो नमः
ऊं ग्रहेभ्यो हुं नमः ॥ ऊं दिग्देवेभ्यो नमः
हृदये नैव कर्त्तव्यं सर्वमावाहनादिकम्
ये वास्यांन्येतुयेतेषा मंत्रेणैव विधीयते
इति श्री शाम्बपुराणे पूजाविधानं नाम पञ्चाशत्तमोऽध्यायः ५०

## एकपञ्चाशत्तमोऽध्यायः

ऊं चंद्राय हुं नमः ॥ ऊं मंगलाय हुं नमः ॥ ऊं बुधाय हुं नमः ॥ ऊं वृहस्पतये हुं नमः ॥ ऊं शुक्राय हुं नमः ॥ ऊं शनैश्चराय हुं नमः ॥ एते ग्रहाणां यंत्राः ॥ ऊं इन्द्राय सुराधिपतये नमः ॥ ऊं अग्नयेते जोधिपतयेनमः ॥ ऊं यमाय प्रेताधिपतये नमः ॥ ऊं निर्ऋतयेरणोधिपतये नमः ॥ ऊं वरुणाय जलाधिपतये नमः
ऊं वायवे प्राणाधिपतये नमः ॥ ऊं कुबेराय पद्माधिपतये नमः
ऊं शंकराय सर्वात्मने नमः ॥ ऊं विद्याधिपतये नमः ॥ ऊं ब्रह्मणे सर्वलोकाधिपतये नमः ॥ ऊं शेषायसर्वनागाधिपतये नमः ॥ एते दिक्देवानां मंत्राः ॥
अतः परं प्रवक्ष्यामि स्नानस्य विधिमुत्तमम्
निर्मले सलिले स्नायात् सुतीर्थे हृदयादिभिः १
मनसंयुग मंगेषु दत्वैव सिरसा तथा
ध्यात्वा पुण्यानि तीर्थानि वगा हेच्छिरसा जलम् २
धर्मास्त्रनेत्रैः कुर्वीत ब्राह्मणन्मंत्रयेत्ततः
पूरकाभ्यां खरवोल्बेन अर्कं वीक्षेत सप्तधा ३
निन्यसेन्मंत्र संयागं त्वचांगुष्ठादितः क्रमात्
ततः स्वहस्तलयोऽरुणादीश्चसंख्यया ४
अमृताख्यां ततो बध्वा मुद्रा ध्यानं समाचरेत्

जाठरं ज्वालयेदग्निं पुरकाकुलवायुना ५
कुंभकेनापि संरुद्धयाच्चिविधंकल्मषं हरेत्
रेचकेन च निष्क्रम्य हृदि शूद्धिं समाचरेत् ६
आकृष्य पूरकेर्णार्कं तेजः पिंडं पुनः पिबेत्
खरवोल्केन च तत्तेजः स्वमूर्तौ विनिवेशयेत् ७
हृदये मूर्ध्नि मूले तु नेत्रा वर्त्यकरेषु च
हृदयादीनि चांगानि विन्यसेत् तत्वयोगतः ८
शुशुभे द्वादशदले कमणे च स्थितं तदा
आत्मानं चिंतयेद्युक्तः शुद्धचामीकर प्रभम् ९
एवं कृत्वैव चात्मानं मंत्रमुद्रादियोगतः
ततः परमया भक्त्या तदा पूजां समाचरेत् १०
काष्टैः काष्ठं विनिर्मथ्य मणेर्वातापदर्शनात्
आकृष्यते यथावह्निः क्रियाशेणकरः क्षमः ११
तद्वन्मंत्रादियोगेन निष्कलात् सकलो रविः
आहूय पूजयेत्सम्यक् य्होगांगो हृष्टमानसः १२
मित्रालये नदीतीरे गोष्ठेषूपवनेषु च
प्रफुल्लपद्मखंडेषु न वीषुसरसीषु च १३
नदीनां संगमे तीर्थे पर्वतेषु वनेषु च
धर्मपृष्ठे समे देशे कुश-पुष्प-फलान्विते १४
अनुखरे प्रकृष्टे तु प्रागुदक्प्रवणे शुभे
यत्र वारमते ये च तत्र पूजा विधीयते १५
यूभ्यर्कानलतोयेषु प्रतिभायां महाध्वरे
कांचनं ताम्र पात्रे वा कुर्यात्पूजां वटेऽथवा १६
विना मंत्रविधानेन पूजा व्यर्था नृणां भवेत्
सा चैव च नमस्कारा कर्तुः शतुगुणा भवेत् १७
कनीयांस्तु विधिर्मंत्रो मध्यमो वातथोत्तमः

सहस्रलक्षकोटिस्तु क्रमशः फलमाहरेत् १८
प्रत्येकं मंत्रजापेन पूजाविधिरिहोत्तमः
मध्यमः पादपिंडेन कनीयान्पिण्ड एव च १९
व्योमा कृतो व्योमशिखो मुद्रावाहन कर्मणि
गमने च ख खोल्कस्य शोषणे तृप्तिरक्षया २०
रथस्य चरथादीनां दिगीशानां समुद्रया
उत्तमो हि विधिर्मध्यः क्रनीयान् शातपद्मया २१
आगमः स्थापनं रोधः सान्निध्यं पाद्यमेव च
अर्धःस्नानं तथा वासो लेपनं कुसुमानि च २२
धूपं विभूषणं चैव तथान्येषां च पूजनम्
अंगादीनां च देवानां शेषांश्चान्यान्यथाक्रमम् २३
दीपं बलिमथातोऽर्धं जपं न्यासं स्तवं तथा
अग्निक्रियां च संहारं शुद्धिपातं विहारणम् २४
विसर्जनं च निर्हारं कुर्यात् सर्वं पृथक् पृथक्
मंत्रैर्यथोदितैः स्वैस्स्वैर्भक्त्या परमयान्वितः २५
निष्कलं सकलीकृत्य मंत्रेणह्वानयेत्ततः
आहूयंते हि यद्देवमागमः समुदाहृतः २६
उपवेशनं च कमले तस्यैव स्थापनं विदुः
विधातोऽन्यत्र गमने रोधोऽसौ परिकीर्तितः २७
युक्ताग्रमनसः स्थानं यत्र सान्निध्यमुच्यते
पादयोः सलिलैः सद्भिः पाद्यं देवस्य कथ्यते २८
हेमपात्रे तथा ताम्रे चंदनोदक संमिते
आदाय सलिलं पुण्यं हस्ताभ्यां परिंगृह्य च २९
जानुभ्यां धरणीं गत्वा दद्याददर्घंगभस्तितने
देयं चंदनपंकेन कुंकुमेन च लेपनम् ३०
रक्तराजीवपुष्पाद्यैरम्लानैः सुसुगंधिभिः

पूंजां च कुड्मलैः कुर्याद्गंध धूपादिवासितैः ३१
कर्पूर गुग्गुलैश्चैव ह्युशीरागुरुचंदनैः
तुरुष्कसारैः सर्जैर्वा धूपो देयः सुगंधिभिः ३२
रत्नैरनेकैर्विविधैः शातकुंभादिभूषणैः
खखोल्कं भूषयेदेवं हृदयैर्यनसारविम् ३३
अंगादीनां च सर्वेषां देवतानां यथाविधि
पूजनं च विधातव्य सपुष्पैश्चंदनांबुभिः ३४
षष्टिप्रदीनान् सुबहून् दद्यादर्काय शक्तितः
शंखादिनिर्घोश्चर्दिव्यगोजारनिः स्वनैः ३५
वेणु वीणास्वनैर्घोषैः पूजयेन्मिहिरं शुभम्
वद्व्यमान विधानेन श्रद्धया सुमनोयतम् ३६
खखोल्कयूतंमंत्रं च जपेच्चैवसुयत्नतः
सर्वपाद्यादिकां पूजां जपं त्रिविधमेव च ३७
न्यासः खखोल्कहृदयं रथांगानां प्रकीर्तितम्
धूपविग्रहयोः सम्यक् वर्णनंस्तवमुच्यते ३८
मंत्रयुक्त्प्रावियोगेन द्रव्यैराज्यादिभिः शुभैः
उद्दिष्टं देवयजनं वषट् स्वाहान्तसंयुतम् ६९
अग्नवियं समुद्दिष्टानि खिलाग्निक्रियां सुराः
कृते पूजा विधानेन विप्रकीर्णे च चेतसि ४०
संहृतिः क्रियते यत्र संहारं तं विनिर्द्दिशेत्
पूजा विधाने सर्वस्मिन् द्रव्यमुद्रादिहानितः ४१
यः कश्चित्तनुजो दोषो विशुद्धया तं समुन्नयेत्
शिरसा मनसा वाचा दृष्ट्या दुद्धया च शुद्धया ४२
जानुभ्यामथपाणिभ्यां प्रणिपातो हि सप्तधा
सप्तसप्त समुद्देशाद्द्याद्वि प्रायशक्तितः ४३
दानं गुणवते देय मिदं वितरणं स्मृतम्

सकली कृत एवाथ निष्कलीकरणात्पुनः ४४
विसर्जनेन मंत्रेण प्राप्नोति पुरुषोत्तम्
यजतः कुसुमस्तोकं गृहीत्वा होमभस्म च ४५
निक्षिपेद्दिशि कौबेर्य्यां निर्हारोऽयमुदाहृतः
आगमाद्यात्तु या पूजा सानन्दा परिकीर्तिता ४६
सर्वास्तास्संविधातव्याः सपुष्पचंदनादिभिः
मंत्रमुद्रा तथाध्यानं योगाङ्गं सुसमाहितम् ४७
समं संपादयेत्सर्वमक्लिष्टं यत्परायणम्
यामद्वयरिच्छन्नं प्राप्तर्वेलादितः क्रमात् ४८
शान्तिं पुष्टिं च शान्त्यर्थं शान्तवत्कीर्तितं मया
ज्योतिरन्नस्तथाग्निश्चज्योतिष्मानपरः स्मृतः ४९
शुक्रश्च हरितोऽत्यग्निरित्यश्वाः परिकीर्तितः
सर्पिस्त्रिनाभिरुणिर्ऋग्विधातेत्यमी तथा ५०
प्रणवादि समायुक्ता नमस्कारान्तकल्पिताः
हृदयादिरथादीनां यज्वन्तानां पदक्रमात् ५१
आदित्याय सहे हेति मिहिरागच्छेतिद्वयम्
स्ववर्गेणेतिहुंपश्चान्नमः स्वाहांत कल्पितः ५२
अयमाकाशमंत्रो हि तथोकारादिसंयुक्तम्
खखोल्कायेतिस्वाहान्तो मूलमंत्र उदाहृतः ५३
प्रणवादिव्येमिव्यापीसर्वलोकाधिपस्तथा
तिष्ठतिष्ठेति निर्दिष्टः स्वाहान्तः स्थापने मतः ५४
अर्कप्रदीप्तचिपिटजगच्चक्षुः प्रभाकरः
समहातेजसो मंत्र खखोल्कहृदयादिभिः ५५
एते प्रीतिदां सौख्याः स्वाहान्ताः प्रणवादिकाः
कवचस्तु स हुंकारो हुंफडस्त्रं तु योजयेत् ५६
गायनाधिपतिश्चैव सहस्रकिरणस्तथा

संरोधात्मेति संरोधो ओं स्वाहाद्यन्तकल्पितः ५७
ओमाकाराविकासिने जगच्चक्षुषे तथा
सान्निध्यं कुर्वीतिद्विश्चस्वाहान्तः सन्निधाय च ५८
हांचिरीटिचिरीतिंदीप्तांघ्रिरितिस्मृतः
प्रणवादिकः पद्यमंत्रो नमः शब्दान्त संयुतः ५९
कले गभस्तिने द्विः कालिकालीति चापरः
सर्वार्थ साधिनींत्येवककिद्विस्त्रिः सहुंकृतिः ६०
अर्धमंत्रो विनिदिर्दष्टोऽप्यन्ते कृतनमस्कृतिः
ॐ सवित्रे च वरुणाय नमः स्यात्स्थापने मंत्रः ६१
खखनेत्रसहस्त्रं तु नमोन्तः परिकल्पितः
वस्त्रगंधस्तु विज्ञेयः पिंगलाश्छन्दलेति च ६२
प्रणवादिहिलीतिर्द्विर्महालाधरस्तथा
तेजोधिंपतिर्नमोंतश्चपुष्पयन्त्र उदाहृतः ६३
ज्वलितार्कस्तुतारादिर्धूपद्विर्भिहिरज्वलः
विचिब्ररत्नधारीति नमोन्तो भूषणः स्मृतः ६४
महाश्वेतादण्डपाणिररुणिः पिंगलस्तथा
प्रणवदिनयोन्ताश्च संयोज्याः पद सन्त्विमे ६५
अरुणः सूर्योंऽशुमाली धातेन्द्रश्च रविस्तथा
गभस्तिश्च यमश्चैव स्वर्णरेता स्तथैव च ६६
त्वष्टामित्रोथ विष्णुश्चद्वादशैव प्रकीर्तिताः
आदित्याः प्रतपन्त्यते माधमासादिषु क्रमात् ६७
प्रणवादिसमायुक्तानेतानेवं च संज्ञया
स हुंकार नमस्कारान् संयुक्तान्संप्रयोजयेत् ६८
हरिकेशो रथः कृच्छोरथौजाः पुंजिकस्थलः
क्रतुस्थलो विश्वकर्मा तथा चैव रथस्वनः ६९
रथचित्रोर्थमनाख्यः सहजान्यस्तथाप्सराः

विश्वव्यचारथप्रोतः सह समाठरेण तु ७०
प्रम्लोचन्त्यनुम्लोचन्तीसंपद्वसुस्थापरः
तार्क्ष्यश्चारिष्टनेमि विश्वाची च घृताचिका ७१
अर्वाग्वसुः सेनजिच्च सुषेणश्चोर्वशी तथा
पूर्वचित्तिश्च संयोज्याः पूज्याः मंत्र विधानतः ७२
कीप्ताननः कुमारश्च धृपिर्योगवहाविराट्
केशीसुण परिष्टौ च माठरानन्तनिक्षुभाः ७३
तेजावाह इति ख्याता द्वादशार्क गणाधिपः
एतेस्वनामतोऽभ्यर्च्य नमोन्ताः प्रणवादिकाः ७४
क्षुमामैलाप्रभाश्यामारोचिर्दीप्तिः सुवर्चला
योज्यास्तारादि संयुक्ता नमोन्ता सप्तमातरः ७५
चन्द्रं शुक्रं गुरं भौमं सौरिं केतुं बुधाननौ
स हुंकारान्सप्रणवान्ननमोन्तान्योजयेद् ग्रहान् ७६
इन्द्रोऽग्निर्यमोर्निर्ऋृतोर्वरुणो वायुरेव च
कुबेरः शंकरो ब्रह्मा शेषश्चेति दिगीश्वराः ७७
एतेनव संयुक्तास्तथाधिपतियोजिताः
नमस्कारन्तसंयुक्ताः सयोज्यानामतो दश ७८
तारादिते योधिपतिर्यस्त्वयैव नमस्कृतः
अर्कायाप्य गृहाणेतिह्यमृतेति निवेदने ७९
जलकुन्दलापेत्यादौ दिव्यातोद्य प्रियाय च
प्राणवादिनमोन्ताय मत्तोद्येमंत्र उच्येत ८०
अंशुमानथदेवश्च द्वौ रशब्दौ गीयतेति च
ॐ स्वाहाद्यान्तसंयुक्तो न्यास मंत्र उदाहृतः ८१
आदौ नमस्ते इत्येव दिव्य फूपाय चेत्यथ
सर्वभूतात्मने चैव नमस्सर्वस्य तेजसे ८२
तथाधिपतयेत्येवं भानवे लोकचक्षुषे

नम ओंकारसंयुक्तः स्त्रोत्रमंत्र उदाहृतः ८३
नमस्कारान्तिका पूजा इह एषा उदाहृता
स्वाहावषट्कारयुता होमे चानेन तर्पयेत् ८४
आदौ तारसमायुक्तं संहरेति पदद्वयम्
विरोचनेतिस्वाहान्तो मंत्रः संहार संज्ञकः ८५
आदौ शान्तात्मने कृत्वा सर्वलोकजयाय च
तारादिकः शुद्धमंत्रः स्वाहान्तः परिकीर्तितः ८६
खखोल्कायेति कृत्वापस्तत्पश्चाद्विघ्नेहेति च
सहस्त्रकिरणायेति धीमहिति तु चापरम् ८७
तन्नो रविः प्रचोदयादित्योंकारादि संयुक्तः
स्वाहान्तो हि नमस्कारो विधेयः संप्रकीर्तितः ८८
स्वर्गेणेति च वास्यादौ द्विर्गच्छेति सविग्रहम्
द्वादशादित्य इति द्विर्हिलीत्योंकार संयुतम् ८९
गच्छवेति च ततः कृत्वा चापि पप्मा गतम्
प्रणवादिरेष मंत्रः स्यात् स्वाहान्तो हि विसर्जने ९०
आदावोंकार संयुक्तश्चंडपिंगल इत्ययम्
निर्माल्य हरणे मंत्रस्स्वाहान्तः परिकीर्तितः ९१
प्रागुदिष्टे भुवोभागे देवीं शुद्धमृदोद्भवाम्
चतुरस्त्रां विदिक्कोणां कुर्यात्प्रावप्रक्णोत्तराम् ९२
गोमयेनोपलिप्यादौ समृदा च भुवं तथा
चन्दनागुरुपंकेन कुर्यादर्चन मंडलम् ९३
वक्ष्यमाणविधानेन स्यन्दनं शश्वदालिखेत्
पूजाविधाने ध्येयः स्यात्तत्र देवो रविः स्थितः ९४
सप्तभिः सप्तभिर्युक्तं हरिद्भिरहियोक्तृभिः
एकचक्रंरथं तस्य चिन्ययेदरुणान्वितम् ९५
खरेऽजं भासदलं शुभ्रं मध्ये रथ्यस्य तु

ध्यात्वा तत्कर्णिकामध्ये वह्नि शंखशिखोज्ज्वलम्  ९६
आवाहनेन मंत्रेण मुद्रया व्योमसंज्ञया
कुर्वीत रश्मिनिचयं तमेकत्र पृथक् स्थितः  ९७
पिंडीकृत्य च तत्तेजो मूलमंत्रेण चार्कवत्
तत्र तत्स्थापयेद्व्योम्नि मन्त्रेण स्थापनेन तु  ९८
तत्रस्थं चिन्तयेद् देवं षड्वीजं प्रणवान्वितम्
हृदादिभिः षड्भिरङ्गैः तं देवं च स्समन्वितम्  ९९
कण्ठादादिसंवीतं पध्महस्तं महाप्रभम्
खखोल्कं चिंतयेद्देवं द्वादशादित्य दैवतम्  १००
शिरोऽथहृदयं चैव शिखां कवचमेव च
एतानि क्रमतोऽङ्गानि पूजयेद्व्योममूर्द्धनि  १०१
पद्मपपत्राग्र वृन्दान्ते ज्वलदस्तं तथैव च
महाश्वेतोदण्डपाणिररुणः पिंगलस्तथा  १०२
दिक्षु वेशरमूलेतु न्यस्य ऐन्द्रीक्रमादिमे
वेशराग्रे तु पद्मस्य पत्रेष्वभ्यर्च्य पूर्ववत्  १०३
तत्र तत्कर्णिकामध्ये तेजोरूपं तु चिन्तयेत्
विन्यसेद्द्वादशादित्यान् इन्द्रादीन्हि यथाक्रमम्  १०४
हरिकेशस्तथा चैन्द्रीरथकृच्छरथौजसौ
पुंजिक्रतुस्थलयुतौ योज्यौ सव्यापसव्ययोः  १०५
न्यसेद्याभ्यां विश्वकर्मा पार्श्वयोश्च रथस्वनः
रथचित्रश्च मेनाख्या सहजन्यान्वितौ तथा  १०६
विश्वव्यचाः प्रतीच्यां तु न्यस्य चाश्वसमीपतः
पार्श्वयोरथ प्रोतश्चमाठरोऽथ प्रकीर्तितः  १०७
प्रम्लोचाम्लोचिसंयुक्तो देवदेवस्य कीर्तितः
समद्धसूकस्तूरस्यां तर्द्यश्चारिष्टचनेमिनौ  १०८
विश्वाचीसघृताचीभ्यां संयुक्तौ सव्यवामतः

उद्धवमर्वावसुस्तस्य सेनजिच्च सुषेणकः १०९
उर्वशीपूर्वचित्तिश्च सहस्ताभ्यां यथाक्रमम्
दीप्ताननाद्या ये प्रोक्ता द्वादशार्कगणाधिपाः ११०
ते हि पूर्वात्समारभ्य तस्याः पूर्णस्य संधिषु
न्नुपाद्या पर्णतो न्यस्याः कंदरायारथस्य तु १११
दिग्विदिग्ग्रहपर्यन्ते चन्द्राद्या इंद्र दिवक्रमात्
वासवादींश्च दिग्देवान् न्यसेद्दिन्नु दशस्वपि ११२
एवं विन्यस्य सर्वास्तु ततः कुर्वीत पूजनम्
अथ मन्त्रान्प्रवन्न्यामि यथावदनुपूर्वशः ११३

ऊं विश्वात्मने नमः ॥ ऊं हृदयशक्र ज्योतिषे नमः ॥ ऊं चित्रज्योतिषे नमः ॥ ऊं सत्यज्योतिषे नमः ऊं ज्योतिष्मदग्नये नमः ॥ ऊं शक्राय नमः ॥ ऊं हरिताय नमः ॥ ऊं अत्यग्नये नमः ॥ एते यथाक्रममश्वानां संग्रहाः ॥ ऊं सर्पाय नमः वासुकिहृदयम् ॥ ऊं चित्रनाभव नमः चक्रहृदयम् ॥ ऊं अरुणाय नमः अरुणहृदयम् । ऊं ऋत्विलिवधात्रे नमः पद्महृदयम् ॥ ऊं आदित्यायहे हेभिहिरागच्छ गच्छ हुं खः ठः ठः सर्वाह्लादनमन्त्राः ॥ खखोल्काय ठः ठः मूल मन्त्रः ॥ ऊं व्योमव्यापिने सर्वं लोकाधिततये तिष्ठ तिष्ठ ठः ठः स्थापनमन्त्रः ॥ ऊं अर्काय ठः ठः हृदयम् ॥ ऊं प्रदीप्ताय ठः ठः शिरः ऊं विपिटये ठः ठः शिखाम् ॥ ऊं जगच्चन्नुषे ठः ठः नेत्रम् ॥ ऊं पद्माकराय हुं ठः ठः कवचम् ॥ ऊं महातेजसे हुं फडस्त्रम् ऊं गंगणादिपतये सहस्त्र किरणाय संरोधात्मने नमः ॥ संरोधमन्त्रः ॥ ऊं आकाशविकासिने जगच्चन्नुषे सान्निध्यं कुरु कुरु ठः ठः सन्निधापनमन्त्रः ॥ ऊं इह रटिचिरिटयेदीप्तांध्ये नमः पाद्यमंत्रः ॥ ऊं गभस्तिने किलिकिलिकालिकाखिसर्वार्थ साधिनी ककि ककि हुं नमः ऊं सवित्रे वरुणाय नमः स्नानमन्त्रः

॥ ऊं खखनेत्राय सहस्रतनवे नमः वस्त्रपन्त्रः ॥ पिङ्गलायाछले नमः ॥ गन्धमन्त्रः ॥ ऊं हिलिहिलि महामालाधरतेजोऽधिपतेये नमः ॥ पुष्पमन्त्रः ॥ ऊं ज्वलितार्काय नमः ॥ धूपमन्त्रः ॥ ऊं मिहिरायज्वलविचित्ररत्नधारिणे नमः भूषणमन्त्रः ॥ भ्रभ्रानिम्बमन्त्रेणैवं पूजयेत् ॥ ऊं महाश्वेतायै नमः दण्डपाणये नमः ॥ ऊं अरुणादेव्यै नमः ॥ ऊं पिंगलायै नमः ॥ ऊं अरुणाय हु नमः ॥ ऊं सूर्याय हुं नमः ॥ ऊं अंशुमालिने हुं नमः ॥ ऊं धात्रे हुं नमः ॥ ऊं इन्द्राय हुं नमः । ऊं रवये हुं नमः ॥ ऊं गभस्तिने हुं नमः ॥ ऊं यमाय हुं नमः ॥ ऊं स्वर्णरेतसे हुं नमः ॥ ऊं त्वष्ट्रे हुं नमः ॥ ऊं मित्राय हुं नमः ॥ ऊं विष्णवे हुं नमः ॥ एते आदित्यानां मन्त्राः ॥ ऊं हरिकेशाय हुं नमः ॥ ऊं रथकृच्छाय नमः ॥ ऊं रथौजसे नमः ऊं पुंजिकस्थलायै नमः ॥ ऊं ऋतुस्थलायै नमः ॥ ऊं विश्वकर्मणे नमः ॥ ऊं रथस्वनाय नमः ॥ ऊं रथचित्राय नमः ॥ ऊं मेनकायै नमः ॥ ऊं सहजन्यायै नमः ॥ ऊं विश्वव्यचसे नमः ॥ ऊं रथप्रोटाय नमः ॥ ऊं अंशमाठराय नमः ॥ ऊं प्रम्लोचन्त्यै नमः ॥
ऊं अनुम्लोचन्त्यै नमः ॥ ऊं तार्क्ष्याय नमः ॥ ऊं अरिष्टनेमिने नमः ऊं विश्वाच्यै नमः ॥ ऊं घृताच्यै नमः ॥ आर्वाग्वसवे नमः ॥ ऊं सेनजिते नमः ॥ ऊं सुषेणाय नमः ॥ ऊं उर्वश्यै नमः ॥ ऊं
पूर्वचित्यै नमः ॥ एते रश्मिपतीनामप्सरसां च मन्त्राः ॥ ऊं प्रदीप्ताननाय नमः ऊं कुमाराय नमः ॥ ऊं घृणिपाय नमः ॥ ऊं अंगावहाय नमः ॥ ऊं विराजे नमः ॥ ऊं केशिने नमः ऊं सुरराजाय नमः ॥ ऊं अरिष्टाय नमः ॥ ऊं माषाय नमः ॥ ऊं अनन्ताय नमः ऊं निक्षुभाय नमः ॥ ऊं तेजोवहाय नमः ॥ एते गणाधिपानां मन्त्राः ॥ ऊं क्षुपायै नमः ॥ ऊं मैत्र्यै नमः ॥ ऊं

प्रेमायै नमः ॥ ऊं श्यामायै नमः ॥ ऊं रोचिषे नमः ॥ ऊं
दीप्तये नमः ॥ ऊं सुवर्चलायै नमः ॥ एते मातृ मन्त्राः ॥ ऊं
चन्द्राय हुं नमः ॥ ऊं शक्राय हुं नमः ॥ ऊं बृहस्पतये हुं नमः
ऊं अंगारकाय हुं नमः ॥ ऊं शनैश्चराय हुं नमः ॥ ऊं राहवे हुं
नमः ॥ ऊं केतवे हुं नमः ॥ ऊं बुधाय हुं नमः ॥ एते ग्राहाणां
मन्त्राः ॥ ऊं इन्द्राय सुराधिपतये नमः ॥ ऊं अग्नये तेजोऽधिपतये
नमः ॥ ऊं यमाय प्रेताधिपतये नमः ॥ ऊं कुबेराय यक्षाधिपतये
नमः ॥ ऊं शंकराय सर्वविद्याधिपतये नमः ऊं ब्रह्मणे
सर्वलोकाधिपतये नमः ॥ ऊं शेषाय सर्वनागाधिपतये नमः ॥
एते दिग्देवतानां मन्त्राः ॥ ऊं तेजाधिपतये नमः ॥ दीपमन्त्रः ॥
ऊं अकार्य गृहाणामृतम् ॥ नैवेद्यमन्त्रः ॥ ऊं जलकुन्दलाय
दिव्याय तोद्यप्रियाय नमः ॥ आतोद्य मन्त्राः ॥ ऊं
अंशुमते देवाय गोपाय ठः । पूजाजपन्यास मन्त्रः ॥
ऊं नमस्ते दिव्यरूपाय सर्वभूतात्मने नमः
सर्वतेजोऽधिपतये भानवे लोकऽचक्षुषे ११४
स्तोत्रमिति ५२
अग्निक्रियां ततो वक्ष्ये मंत्रमुद्रादितः क्रमात् ।
उल्लेखनं धारणां तु कुर्यादर्कहृदस्तथा ११५
आज्येन व्रीहिभिः पक्वैरर्कस्य कुसुमैश्च वा
प्रत्येक माहुतीर्दद्याद्ये पूज्याः परिकीर्तिताः ११६
ऊं संहर संहर विरोचन ठठः उपसंहार मंत्र ॥ ऊं शांतात्मने
सर्वलोकप्रियाय ठः ठः ॥ शुद्धिमंत्रः । ऊं खखोल्काय विद्महे
सहस्रकिरणाय धीमहि तन्नो रविः प्रचोदयात् ॥ नमस्कार
विधावर्कहृदये नदानः ॥ गच्छागच्छ स्ववर्गेणद्वादशादित्य
विग्रहम् ॥ हिलिहिलिगच्छदेवयथागतः स्वाहा ॥ विसर्जनमंत्रः ॥
ऊं चण्डपिंगलाय ठः ठः निर्माल्यमंत्रः ॥

एतद्यः प्रत्यहं कुर्याद्रविवासर एव च
सकृद्वा यो विधानं च तस्य पुरयकल शृणु ११८
अष्टपुष्टिकाविधिः ॥ देवा ऊचुः
अर्के कार्या सदा भक्तिः सर्वकालमतन्द्रितैः
आचार्यस्य गुरुणां च रविशास्त्रविदां तथा ११९
षंचम्यां तु हविर्भुवक्त्वा नवं दशन धानवम्
भक्षयित्वा तु गृहणीयाद्भूतं नियम पूर्वकम् १२०
व्यायामं मैथुनक्रोधान् मत्स्यं मांसं च गृञ्जनम्
हिंसामधुशिलापृष्ठनिवृत्तंकांस्य भोजनम् १२१
उदक्याः स्पर्शनं तैलं सर्वनिर्माल्य लंघनम्
षष्ट्यांतु वर्जनो यानि सप्तम्यां चैव दीक्षितः १२२
सकलो निष्कलः सूर्य इत्युक्तं वित्वयाविभोः
सकलं निष्कलं चैव समाख्या तु मिहार्हसि १२२३
देव उवाच
सकलो निष्कलश्चैव यथा सूर्यः प्रकीर्तितः
कथ्यमानं मया सर्वं निबोधतासुराः १२४
निर्व्यापारं तथा भूतमासीत्सर्वमिदं जगत्
निद्रोऽहममलं ज्ञानं निरानंदं निरात्मकम् १२५
अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकम्
प्रधानं प्रकृतिं चेति यमाहुस्तत्वचिन्तकाः १२६
गंधवर्णरसैर्हीनं शब्दस्पर्श विवर्जितम्
जगद्योनिं तु सर्वार्थं देवशंक्यं सनातनम् १२७
यमाहुः सर्वभूतानां परमं कारणं महत्
अयमाद्यमजं सूक्ष्मं त्रिगुणप्रभावव्ययम् १२८
यमाहुः पुरुषं श्रेष्ठं परमं परमेश्वरम्
येनात्मना सर्वमिदं जगद्व्याप्तं चराचरम् १२९

जगत्सृष्टिन्नयाव्यक्तश्चोदितः स तदा स्वयम्
महदादिगुणैर्युक्तस्तेजोरूप समन्वितः १३०
अव्यक्तं कारणं यत्तदुदिष्टं त्रिगुणात्मकम्
स्वयमेकाग्रमापन्नं खखोल्कमिति तत्स्मृतम् १३१
योगमास्थाय परमं स देवः सर्वतत्ववित्
ततः प्रजाः स्त्रष्टुमनाः ससर्ज सलिलं पुनः १३२
आप एकार्णवेचैव यदस्याय तनुंगतः
नारा स्ताः सृष्टिकरणेतेन नारायणस्तु सः १३३
एकार्णवे ततस्तस्मिन्निर्विभागे समन्ततः
नारायणः खखोल्कोऽसौ सुष्वाप सलिले रविः १३४
दिव्यं शतसहस्त्रं च वत्सराणां तदांभसि
तेजो रूपेण महता न्यस्य सत्सलिले स्वयम् १३५
ततः काले व्यतीते तु कृत्वा त्वण्डहिरण्यम्
आत्मानं सृष्टवांस्तत्र नैकशक्ति समन्वितः १३६
खखोल्क इति चाख्यातस्तत्रैकः संप्रकाशकः
विराड्यः पुरुषश्चान्यः ख्यातो ब्रह्मेति चापरः १३७
पंचानां तु सुखादीनां कारणं हिम वतः स्मृतः
खखोल्क इति तेनासौ निगमज्ञैरुदाहृतः १३८
हिरण्येन च गर्भस्थोऽपस्मादेष समावृतः
हिरण्यगर्भ इत्येवं तस्मात् स तु निगद्यते १३९
बृहत्वाद्बृंहणं त्वाद्वा ब्रह्मा सौ परिकीर्तितः
पुरे प्रतिष्ठतत्वाच्च पुरुषत्वमुपागतः १४०
देवेषु च महादेवो महदेवस्ततः स्मृतः
सदेशत्वाच्च लोकानामवश्यत्वान्महेश्वरः १४१
याति यस्मात्प्रजाः सर्वा प्रजापतिरिति स्मृतः
स्वयं बभूव पूर्णत्वात्स्वयंभूरिति विश्रुतः १४२

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रभुक्
सहस्रबाहुः प्रथमः पुरुषोऽसौ निगद्यते १४३
यत्किंचिद्दृश्यते लोके तेजोरूपं प्रकाशकम्
खखोल्क इति तत्सर्वं निर्दिष्टं लोककारणम् १४४
सर्वोपाधिविनिर्मुक्तं नित्यं सदसदात्मकम्
विज्ञानमात्रमव्यक्तं तमाहुः कारणं परम् १४५
अव्यक्तात्प्रकृतिर्जज्ञे महांस्तु सदसद्गुणः
महत्तत्वादहंकारस्तस्मात् सर्वेन्द्रियाणि च १४६
इन्द्रियाणि च तन्मात्रं सन्निवेश्यात्मनि प्रभुः
सृष्टवान्सर्वभूतानि खखोल्कः पुरुषः प्रभुः १४७
खखोल्कात्कारणाद्यस्मादव्यक्तान्तं चतुर्विधम्
जगद्व्यक्तं समुत्पन्नं विकारैर्मद्दादादिभिः १४८
स यदामनसा सार्धं संयोगमधिगच्छति
तदा हि सर्वभूतानां प्रवृत्तिरूपजायते १४९
आत्मनो दिवसस्यान्ते सर्वकर्मात्मनः स्वयम्
यः समारोप्यात्मसुखं तेजोराशिः स्वपित्यसौ १५०
प्रतिबुद्धः पुनरसौ महाभूतादिभिः सह
करोति सर्गं स तदा गुणत्रयसमन्वितम् १५१
एवंविधश्च सप्ताश्वः सहस्रकिरणोह्यसौ
सृजति ग्रसते चैव जगत्सर्वं चराचरम् १५२
तपति प्रकाशते चैव स च गर्जति वर्षति
स एव तोय पतिस्सं हृतो वडवानलः १५३
कालाग्निरुद्रो विख्यातः तस्याचन्नीललोहितः
सर्वतेजोऽधियो योगो महांल्लोकश्च स स्मृतः १५४
अनानिनिधनो ब्रह्मा क्षरश्चाक्षर एव च
तस्मात्परतरो नास्ति देवानामपि दैवतम् १५५

तेन सृष्टमिदं सर्वं जगत्स्थावर जंगमम्
सर्वात्मानं च तं यान्ति प्रलये समुपस्थिते १५६
संतापयति लोकां स्त्रींश्चित्रमानुः स्वरश्मिभिः
वर्षाणां सर्वकामानां पर्जन्य इति सह मृतः १५७
तेजो रूपेण महता बाह्यतश्चापि तेन वै
युगान्तवह्निना सर्वमिदं ब्रह्माण्डमाघृतम् १५८
संहारकाले च जगद्भूत्वा संवर्तकोऽनलः
भस्मी करोति त्रैलोक्यं द्वादशादित्यरूपकैः १५९
स्वर्गधारणा-विद्यातः संहारान्प्रकरोति सः
ब्रह्मा विष्णुः खखोल्कस्सरूपकैर्जगतः क्रमात् १६०
उद्यन् स पूर्वदिग्भागे गच्छंचापि स पश्चिमे
मेरुप्रदक्षिणं कुर्वन्जगत्सर्वं प्रकाशते १६१
सर्वभूतशरीराणि यस्मादाघृत्य तिष्ठति
अरुणः कीर्तितस्तेन देवोऽसौ सर्वलोकधृक् १६२
शश्वच्च जायते यस्माच्छश्वत् संतिष्ठते च यत्
यस्मात्सर्वःस्मृतः सूर्यो निगमज्ञैर्मनीषिभिः १६३
अंशवः किरणाः प्रोक्ताः स्मृतस्तेनांशुभानिति
ऐश्वर्यं परमं तस्य वशगाश्चसुरासुराः १६४
इदीतिपरमैश्वर्ये धातुरिन्द्रस्ततः स्मृतः
अवतीमांस्तु लोकांस्त्रीन् यस्मादेष परिभ्रमन् १६५
अवेतिरक्षणेधातुस्तस्मात् सच रविः स्मृतः
गभस्तिभिः समायोगाद् गभभस्ती देव उच्यते १६६
संयच्छते यतः सर्वान् यमस्तेन स उच्यते
प्रजास्संसृजतो रेतः स्वर्णमस्याद्रव पुरा
सुवर्ण रेतास्ततो देवैः कीर्तिताऽसौ दिवाकरः १६७
सृजत्येष प्रजास्त्वष्टो यस्मात्त्वष्टा ततः स्मृतः

त्वष्टत्वेनापि यत्सर्वमौषधीष्वेव यः स्थितः १६८
स्नेहेन सर्वभूतानि यस्माद् भजतिभास्करः
बंधुभूतो हि जगतो मित्रस्तेन स कीर्तितः १६९
यस्माज्जातमिदं सर्वमादित्येनेह रश्मिभिः
प्रवेशनाद्यनापनाच्चविष्णुस्तेन संकीर्तितः १७०
प्रणवेन समायुक्तः सप्तबीजः स्मृतस्तु सः
मूलमंत्रं खखोल्कस्य देवस्यामित तेजसः १७१
प्रणवोदीपकस्तस्य मकारः सांप्रदायिकः
स्वाहाकारनमस्कारौ कुर्यात्पूजा पदे स्थितौ १७२
वर्णत्रयं तु यच्छेषं खखोल्क इति संज्ञितम्
तन्महाभूतभेदैस्तु भिद्यते षंचधा पुनः १७३
खकारः खं विनिर्दिष्टं सूर्यत्वात् पार्थयोगतः
अनादिनिर्धनं शुद्धं तस्य शब्दं गुणं विदुः १७४
सज्जनात्सर्जनाच्चैव ककारो वायुरुच्यते
स्पर्शस्तस्य गुणो ज्ञेयः पूर्वश्वास विकारतः १७५
ऊंकारस्तेजा विज्ञेयं तच्च रूपगुणं स्मृतम्
विकारात्पूर्वयोगश्च तद्गुणाभ्यां च संशयः १७६
लपनात्प्रलयाच्चैव लकारो वरुणः स्मृतः
रसेन पूर्वैश्चगुणैरप्युक्तत्वाच्चतुर्गुणः १७७
ककारा संस्मृता पृथ्वी पित्रागम्यगुणानु सा
पूर्वैश्चतुर्भिश्च गुणैर्युक्ता पंचगुणा भवेत् १७८
खखोल्क इति यत्प्रोक्तं महाभूतानि पंच तत्
प्राणाद्या वायवः पंच तथा बुद्धीन्द्रियाणि च १७९
कर्मेन्द्रियाणि पंचैव सत्वाद्यास्तद्गुणास्त्रयः
मनोबुद्धिरहंकार इत्येतदपरत्रयम् १८०
खखोल्कानीति बीजानि चोक्तान्येकोनविंशतिः

षड्विंशकेतनासश्च सर्वव्याप्तमनेन तु १८१
स एवदेव उत्पाद्यानुष्ठाद्यात्मानमात्मना
सर्वं करोति जगतः पालनं प्रलयं तथा १८२
आदित्यः सततं नाम तपत्येष मरीचिभिः
वह्निः सहस्रकिरणवृत्तं कुंभनिभं स्मृतम् १८३
नदोनद समुद्रेभ्यः सर्वेभ्यः सलिलं ह्यसौ
किरणानां सहस्रेण समादत्ते सदा रविः १८४
अस्तकाले खखोल्कस्य प्रभापादेन पावकम्
समाविशति सूर्यं च दिवा तच्चापि पावकः १८५
एवमेतद्भवेद्धेतुः परस्परनिवेशनात्
प्रकाश्य मौष्णवृत्तिं च कुरुते हि दिवानिशि १८६
एव ब्रह्मा च विष्णुश्च एष देवो महेश्वरः
ऋचोयजूंषिसामानि एष एव न संशयः १८७
उद्यन् सदीप्यते ऋग्भिर्मध्याह्ने यजुर्भिस्तथा
साममिश्चैव सायाह्ने भास्करः प्रतपत्यसौ १८८
त्रीणि रश्मीनि तस्यैव भूलोकन्द्योतयन्त्यधः
चत्वारि तु पितृंस्तिर्यक् त्रीण्येबोर्द्धसुरालम् १८९
सुषुम्नो हरिवेशश्च विश्वकर्मा तथैव च
विश्वव्यचापुनश्चान्यः संयद्वसुरथापरः १९०
उदावसुः पुनश्चान्य पुरोऽयः परिकीर्तितः
खे करसहस्राद्धि सप्तश्रेष्ठास्तु रश्मयः १९१
एवं हि रश्मिभिर्देवो जगत्सर्वं प्रकाशते
तथा वर्द्धयति क्षीणां क्रमतोऽयं निशाकरम् १९२
एवं हि स्वल्प उद्दिष्टः सर्वव्यापी दिवाकरः
अध्वरैर्विविधैः पुण्यरीज्योसौ पाप नाशनः १९३
तस्य तावत्खखोल्कस्य महाध्वरविधिं शुभम्

शृणुष्वाख्यायमानं वै पश्चाच्छाणयथनिष्कलम्  १६४
नमः सवित्रे देवाय समीहित फलप्रदः
अदीक्षितस्तु यः कश्चिदिदन्तन्त्रं विचारयेत्  १६५
स कुणठो भवति क्षिप्रं प्रेत्येह नरक व्रजेत्
आर्जवे कुलसम्पन्ने शीलधर्मरते सदा
दातव्यं सूर्यभक्ताय प्रज्ञावति जितेन्द्रिये  १६६
इति श्रीसाम्बपुराणे एकपञ्चाशत्तमोऽध्यायः  ५१

द्विपञ्चाशत्तमोऽध्यायः
अहं चेदं प्रवक्ष्यामि रहस्यं ज्ञानमुत्तमम्
उक्तं भगवता भानो रहस्यं च प्रकाशकम्  १
प्रथमं शोधयेद् भूमिं स्थानानि च यथाविधि
वर्णाश्चानुक्रमं कृत्वा वसुधां च विशोधयेत्  २
ततोऽधिवासयेद् देवं न्यासेनसकली कृतम्
मणडलं च समालिख्य आचार्यस्सुसमाहितः  ३
एकांते स नदीतीरे तीर्थेष्वायतनेषु च
उद्यानकुसुमाकीर्णे चित्रप्रासादसङ्कुले  ४
आकाशतलके चापि यत्र वा रोचते मनः
पूर्वात्मावेशने चैव भृदेशेदोष वर्जिते  ५
विप्रस्य वसुधाशुक्ला लोहिताक्षत्रियस्य तु
पीता वैश्यस्य विज्ञेया कृष्णा शूद्रस्य कीर्तिता  ६
चतुर्णामपि वर्णानां यथावदनुपूर्वशः
ततः शब्दं निरीक्ष्येह मां गल्यांश्चापि वाचकान्  ७
प्रशस्तं वचनं ग्राह्यम प्रशस्तं विवर्जयेत्
आज्यमध्ववलिप्तेन हन्याज्ञंतु फलेन तु  ८
ततः सूत्रन्नयसेन् मन्त्री यथावदनुपूर्वशः

सिंदूर कानसुचन ग्रन्थिस्त्येन विवर्जितान् ९
कार्पासिकान् बल्वलयान्खौमान कौशिकपट्टकान्
यथाहस्तविभागेन पातयन्मन्त्रवत्समम् १०
ऐन्द्रे च प्रथमं सूत्रं हृदये नाभिमत्रितम्
ततश्चाष्टदले पद्म मम्ये तस्य नियोजयेत् ११
गायत्र्या लब्धस्स तं तु तु चिंन्तयित्वा दिवाकरम्
याति चित्तरजाः प्राज्ञोजरोच्चैव षङ्गरम् १२
सत्वं रजस्तमश्चेति हितं राजस लक्षणम्
अङ्गुष्ठपर्व विपुलं रजः सर्वत्र कथ्यते १३
अतिक्षीणां तथा स्थूलं कृशंबिन्दु विवर्जितम्
आलिखेन्मराडलं दिव्यं चतुर्द्धानं सुशोभनम् १४
आयुधानि तथा चाष्टौ दिशासु विदिशाशु च
पूर्वपत्रे तथोंकारे पश्चिमे तु खकारकम् १५
खोकार दक्षिणं पत्रेऽउत्कार चोत्तरे तथा
पकारः वायु भागे तु स्वाकार वह्नि संस्थितम् १६
हकार नैर्ॠते योज्यं क्षेमे शान्यां तथा दिशि
कर्णिकायां तथा देवं महातेजो द्विरक्षरम् १७
तस्य वै हृद्गतां देवीं विन्यसेच्छ्वेतसंस्थिताम्
अष्टौ वर्ज्या निशा देव्या दिशासु निदिशासु च १८
पूर्णप्राकारमध्येकवर्गः पंचभूतमहानि च
दक्षिणे षकारवर्गः पंचबुद्धीन्द्रियाणि च १९
पश्चिमे टकारवर्गः पंच कर्मेन्द्रियाणि च
उत्तरे तकारवर्गः पंचतन्मात्राणि च
ऐशान्यां पकारवर्गमव्यक्तं च तथा हितम् २०
आग्नेय्यां चकारवर्गं बुद्धिं च ॥ निअर्ॠत्यां वकारवर्गमहं
च ॥ वायव्यां कोऽहं कोऽहं सौमनश्चेति ॥ द्वितीयं प्राकारे सुरेन्द्रं

पूर्वे अग्नियां अग्निम् ॥ याम्ये यमम् । नैर्ऋत्ये निर्ऋत्याधिपम् ॥
पश्चिमे वरुणम् ॥ वायव्ये वायुम् ॥ सौम्ये सोमम् ॥
ऐशान्यामीशानम् ॥ मुद्रालक्षणं घटेत इति ॥ तृतीय प्रकारे
चाशनि तथाशक्तिदराडं खड्गं चक्रं गदां परशुं च पुनर्लिखेत् ॥
तथा परं चैव
महामुद्रादा त्वया दिशि विदिशि ॥ पूर्वादारभ्य
लोकपालानावाहयेत् ॥
चतुर्थे त्वावरने व्योमपुरायं बलिमुपहारांश्च गृह्णीतवति ॥
ऊंकारादिस्वाहान्ताः ॥ ततोऽग्निस्थापनं कृत्वा ॥ आर्यं उष्णिक्
कृतभूषणः ॥
भूमिं उल्लिख्योलिख्यधृतदर्भमवकीर्य ब्राह्मणं दक्षिणतः स्थाप्य
स्त्रुवपात्रं विशोध्य आज्यं प्रदक्षिणीकृत्य दक्षिणं जानुभूमौ निपात्य
स्त्रुवमुपागृह्य अयुक्तपात्रः षडाहुतीर्जुहुयात् ॥ सानिध्यकरणं
संभवति एतादृशलक्षणमग्निं संचिन्त्य छागारूढं प्रादेशमात्रं
सप्तार्चिः कुराडाक्षधरं पिंगलश्मश्रुलोचनम् स्वमन्त्रेणाह्वयेत् ॥ ततः
शिष्यस्यगर्भाधानाद्याः पंचपंचाहुतीर्जुहुयात् ॥ ततो दंडं मेखलां
स्थापयेत् ॥ पूर्वतो मुखं प्रवेशयेत्सूर्यभक्तान् हृदये नाभिमन्त्रितान्
वस्त्रबद्धमुखान् कृत्वा त्रिधासंभ्राम्यन्विचक्षणः ॥ जानुभ्यामवनीं
गत्वाशिरसा तंक्षमपियेत् २१
तत्र तत्पतेः पुरायं तस्य तल्लयमादिशेत्
नाम तस्य स्वरूपेण कारयेद्रविपूर्वकम् २२
यष्ट्या चैव महाश्वेतां हृदि ध्यात्वा दिवाकरम्
ताधनं तु निरीक्षेत ततो दीक्षित उच्यते २३
ततः साधकोऽग्निस्थापनं कृत्वैकैकामाहुतिंजुहुयात्
ततोष्टपुष्पिकां दापयेत् २४

इति श्री साम्बपुराणे द्विपञ्चाशत्तमोऽध्यायः ५२

## त्रिपञ्चाशत्तमोऽध्यायः

नारद उवाच
प्रथमं चिन्तयेत्पदममष्टपत्रं सकर्णिकम्
तन्मध्ये चिन्तयेद्देवं भास्करं रश्मि विग्रहम् १
सहस्रदिनसंस्कारं सूर्यकोटिसमप्रभम्
महातेजोमयं ध्यात्वा आदित्यं पूजयेद् बुधः २
योऽयं हरितवर्णाभं रथे तिष्ठति वाजिनम्
अरुणः सारथिर्यस्य रथवाहः स्वयं स्थितः ३
तमहं लोक शांत्यर्थमादित्यर्थमादित्यमाह्वयाम्यहम्
आयाहि भगवन्मानो तव यज्ञः प्रवर्तते ४
इदमर्घ्यं च पाद्यं च प्रतिगृह्य नमो नमः
आह्वानं सहस्रकिरण स्वागतं स्वागतं स्वागतं ठःठः
ऊं धरधरअद्य ५
वनस्पतिरसो दिव्योगं धार्यो गंध उत्तमः
आघ्रेयः सर्वभूतानां प्रतिगृह्य नमोनमः ६
स्वाहा धूपः गंध गंधादि ठः ठः ॥ गंधः ॥ ऊं दीपपञ्चलिनि
ठं ठं दीपः ऊं एतत्सुमन संदिव्यं गंधाः दि गंधवत्तमम्
आध्रेयः सर्वभूतानां प्रतिगृह्य नमो नमः ७
ठः ठः ॥ पुष्पम् ॥
ऊं ब्रह्मणा ग्रथितं पूर्वं पवित्रमिदमुत्तमम्
यज्ञोपवीतं महातेज गृह्णीष्व नमोऽस्तु ते ८
सर्वैविधि समृद्धस्तु भक्ष्योऽयं परमेश्वर
अमृतं गृह्यतां देव अमृतोऽयं तवाशनः ९ अन्नम् ॥
रत्नोज्ज्वलमिदं पुण्यं मुकुटं भूषणोत्तमम्
मुकुटं गृह्यतां देव देव देव नमो नमः
इति मुकुटम् १०

ऊं भास्करा यत्विदं वस्त्रं सर्ववस्त्रोत्तमं वरम्
कटिभूषणमिदं पुरायं दिव्यं देव नमोऽस्तु ते ११

इति श्री शाम्बपुराणे पूजाविधिनिरूपणे प्रथमं पटलं
नामत्रिपञ्चाशत्तमोऽध्यायः ५३

चतुः पञ्चाशत्तमोऽध्यायः

देव उवाच
संक्षेपेण तु देवेश कथयस्वाष्टपुष्पिकाम् १
देव उवाच
खखोल्काय स्वाहा ठः ठः ॥
ऊंकारं स्थापयेत्पूर्वं खंकारं वह्नि संयुतम्
खोकारं दक्षिणे भांगे लाकारं नैर्ऋते तथा २
यकारं पश्चिमे भागे स्वाकारं वायवे ततः
हाकारमुत्तरे स्थाप्य तथैशान्यां क्षकारकम् ३
ऊं कारेणावाहनं कुर्यात्सान्निध्ये च खमुच्यते
खोकारं स्थापने विद्यालकारं पुष्पकारणात् ५
क्षकारं तु स्वयं देवमादित्यसमतेजसम्
विन्यसेद्तक्षिणावर्तं साधदो बीजसाधने ६
ततो मन्त्रान्प्रयुंजीत यथान्यायेन साधकः
बीजाष्ट पुष्पिका

इति श्री शाम्बपुराणे चतुः पंचाशत्तमोऽध्यायः द्वितीयं पटलम् २
५४

पञ्चपञ्चाशत्तमोऽध्यायः

यद्यत्स्वर्गापवर्गार्थं यच्च सर्वार्थसाधनम्
संवत्सराख्यमतुलं मराडलं कथयामि ते १

आचार्यः संयतो धीमानर्कशास्त्रविशारदः
क्रोधलोभपरित्यक्तो द्विजः शस्तो निरामयः  २
प्राप्ताविषेकनिपुणः शास्त्रभक्तो निरामयः
गुरोर्विधिसमाख्याता इष्यन्ते परिचारकाः  ३
कुलीनाः शुचयो दक्षाः देवद्विजपरायणाः
एते शिष्याः प्रशंसंते रविशासनतत्पराः  ४
अन्ये ये ये स्युरार्ता वा पापरोगाद्यविप्लुताः
अप्रजा वसुहीना वा न कुर्युस्तेऽभिषचनम्  ५
सप्तम्यामुसरागे च संक्रांतिषु गभस्तिनः
पुण्येष्वन्येषु वाहस्सु लिखेदर्कोदिते तथा  ६
प्रागुद्दिष्टे भुवो भागे सुविस्तीर्णे शुभेषुचौ
गोभिरध्युषितं कार्य्यं ब्राह्मणैश्चाभिनन्दितम्  ७
चैद्यकंटकवल्मीकश्मशानदिपि वर्जितम्
खखोल्कहृदये धार्यं दत्वा चैतद्विशोधयेत्  ८
दन्दशूकाखुवेशास्थिकाष्ठभस्म तुषादिकम्
खखोल्कं च गुरं चैव प्रणम्य शिरसा ततः  ९
भूम्यादि भ्रामयेच्छिष्यः स्वपेत्संयतमानसः
प्रासादं द्विरदादीनां काननस्य द्रुमस्य च  १०
आरोहणं प्रशस्तं स्यात् स्वप्ने सिंहासनस्य वा
वस्त्रभूषणदध्यन्ननारीक्षेत्रध्वजस्त्रजम्  ११
लोभो प्रस्तरणं वेरिमारणं रूधिरस्त्रवम्
मांसाशनं सुरास्वादो रुधिर स्वादुकर्त्तनम्  १२
स्वप्न एवं विधो दृष्टः साधयेदभिवाञ्छितम्
पुनः कुर्वीत संस्कारं चंदनागुरुपाणिना  १३
तत्स्थानं शोभनं कार्य्यं नानाध्वजविभूषितम्
किङ्किणीनादमुखरं प्रचलच्चारुचामरम्  १४

पद्मवत्र वनोषेतं कदलीखराड मरिडतम्
शिखिषिच्छोल्लसच्छत्रं वितानकविभूषितम्  १५
नानारत्न समाकीर्णं लसत्स्त्रक्दामतोरणम्
त्रिवृत्तं ग्रन्थिरहितं चोमं कार्पासमाविकम्  १६
सूत्रं प्रशस्यते तत्र खरवोल्कपुरतस्ततः
आशापूर्वासमस्या तु सावित्र्या शासते रविः  १७
ध्रुवास्पदास्तु सौभ्या ये स्तांस्ततान् पश्चिमदच्चिणे
तत्र चोणीं प्रमाणेन अतुलात्प्रभृतिक्रमः  १८
कर्णिकां सूत्रयेन्मध्ये कमलस्य खे शुभाम्
केसरं कर्णिका तुल्यं तस्यापद्विगुणं दलम्  १९
मराडलं वृत्तपत्राग्रं तच्छिष्टाब्जपुरस्थितम्
षड्विंशतिबीजपत्रं चतुर्विंशतिकेसरम्  २०
कर्षितं च सितांभोजं चतुः शृंगं शिखोज्वलम्
ततोऽपि बाह्ममपरं चतुरस्त्रं तु सूत्रयेत्  २१
चतुर्ग्रीवं विदिक्कोणं रथस्यावयवं शुभम्
पुरावरणम्ध्ये तु अरुणं कन्दरावृतम्  २२
तत्पर्यन्तं विनिष्क्रांते द्वे द्वे रेखेचद्विके
पुनस्तिर्यग्गतेऽग्रे तु स्वनिष्क्रांत प्रमाणतः  २३
पुनस्तावद्यं निष्क्रम्य विलम्नमुखयेतु ते
पद्मगर्भा द्विनिष्क्रांतां वारुणयां मकराननाम्  २४
यष्टिं पद्मायतां कुर्याद्रथस्य कर्णिकामिताम्
यष्ट्यग्रेसप्त संलग्नान्वजिनः पार्श्वयोर्द्वयोः  २५
तदधस्तावतीयष्टेर्मूलाद्दर्थस्मतोऽरुणः
चोणी च पठिमित्युक्तातथान्तः शेषपन्नगाः  २६
कर्णिका तेजसः पिराडो भूताद्या बीज संज्ञिताः
खपरं कर्णिका व्योम वारं पत्रं सकेसरम्  २७

पत्राग्रं मराडलं हस्तिरन्तर्व्योमस्थितं पुरे
वाद्याकाशं च तं विद्धि यष्टिधर्मार्थ संज्ञितम्  २८
रथः संवत्वरो ज्ञेयः पितरस्त्वक्रतवः स्मृताः
नेत्रं पत्रस्य मूले वै दोषाच्छंदांसि शंकवः  २९
सुषुम्नाद्यास्तु या नाडयः सहस्त्रं रविविग्रहे
अत ऊर्ध्वं विदित्तु स्यात् पीतं तस्य शतं शतम्  ३०
योजनायत विस्तीर्णमुच्छितं तत्प्रमाणतः
अरुणो घृणयः प्रोक्ता बाह्यछंदासि वाजिनः  ३१
पञ्च तुर्वा सुकिः प्रोक्तश्चक्रे शोस्वभुवस्त्रयः
एवं सर्वमयं प्रोक्तं रथश्रेष्ठं विभावसोः  ३२
दर्मे च कुसुमे वाविलि खेदे तत्समाहितः
संचिन्त्य मनसा वापि पूर्वोद्दिष्टं विधानतः  ३३
पूजयेत्परमं देवं खखोल्कमिति विश्रुतम्
नित्यमेव विधिर्ज्ञेयः परो नैमित्तिकः स्मृतः  ३४
तेजोदानादि दीक्षासु भुवनस्थापितर्षणे
रथे चास्मिन्महायोगा बाह्या वा चरणाबुभौ  ३५
रथकन्दरवीथ्यास्तु तदर्धगुण सम्मिता
वीथी कार्य्या प्रमाणेन द्विगुणा चावरा वहिः  ३६
सावृद्दिष्ट गुणाग्रीवा चारुणा पद्मतुल्यया
अलम्ना षाह्यतः कार्य्या याभ्यां दिशि सदा सुराः  ३७
द्वारमेतद्विनिर्दिष्टं भिन्नमंबुज वेश्मनि
रथस्य बाह्यवीथ्यौ द्वे तस्य दीप्तिः प्रकीर्तिता  ३८
ग्रहदिग्देवताभानोस्तत्रत्या गुणकंदरा
द्वारपश्चिमतो मोक्षं येन शिष्यान्प्रवेशयेत्  ३९
एवं निखिल उद्दिष्टः सूत्रपातविधिक्रमः
अनेन सम्यग्ज्ञानेन प्राप्नोति परमां गतिम्  ४०

आद्यान्तरेण येन स्याद्ये च लेख्याः सविग्रहाः
यादृश्यश्चरजः वाते विधितत्कथयाभ्यहम् ४१
मणिमुक्ताप्रवालोत्थैर्व्रीहिधातुसमुद्भवैः
चुर्णैरग्रीन्द्रमरुद्भर्णैरथ वा चानुपूर्वतः ४२
असमसक्तमिदं कुर्यादस्थूलामकृशा तथा
अविच्छीर्णांरजो रेखां देशिकांगुष्ठयोजिताम् ४३
न च मासप्रमाणं तु रेखामानवशाद् भवेत्
वलिता चा परामृष्या दीना शुक्ला ततः क्रमात् ४४
पद्मगर्भस्य नवमी योगः स परिकीर्तितः
तस्याधिनवमे याभ्यां तयोर्मध्ये तु तत्स्मृतः ४५
लिखेद् भूतादितः पद्मं भौतिक पद्मसंप्रभम्
उदितार्कसमानंतु नैष्ठिके कर्मणि स्थितम् ४६
पीतां तु कर्णिकां तत्र किंजल्कं हरितं लिखेत्
केस राणयरुणान्यन्तः शुक्लान्यादन्तपत्रयोः ४७
पीतामर्कपुरं शोणमस्त्रं पद्माग्रसन्धिषु
प्रतिदिग्देवतास्त्राणि स्वीकृत्य हरितान्हयान् ४८
संध्यारुणसमं व्योमकंदरां कनकप्रभाम्
सितपीतारुणैर्वर्णैर्याष्टर्लेखासुनाननः ४९
चतुर्भिर्वर्णकैर्ल्लेख्यं सर्वमावरणादिकम्
चतुर्भिर्वर्णकैरेव चारालान्पूरयेत्तथा ५०
उक्ता देवादयो येषु पूर्वस्थानेषु तत्र वै
स्वनाभ्यन्तरे तेषां लिखित लेखनं भवेत् ५१
एवं मंडलमालेख्य भूयः स्नात्वा समाहितः
शस्यते हरिता दीर्घा सर्वेषु रविकर्मसु ५२
अग्निगर्भेऽस्य चोषुन्प्रता गुग्गुकूलकान्वुशान्
न्यसेत्समंतात् सर्वेषु ह्यग्निकार्यै च नैत्यिके ५३

विशेषं परमं किंचित्पूजाग्निक्रिययोर्नया
कथ्यमानं सुराः सर्वे निबोधत महाफलम् ५४
नदीद्विजकूल - गोशृंगमृत्स्नागोशीर्षकाननम्
शुक्लं सभस्मदूर्वान्त कर्णीसर्व परोचनाः ५५
क्रोडक्रांतां निशां मुस्तां सर्वास्वष्टासु दिन्त्वपि
चंदनीदक पूर्वेषु चंदनस्थालिकेषु च ५६
शम्याभिपल्लवाद्येप विराजित मुखेषु च
कन्धरा वद्धवस्त्रेषु कलशेषु विनिद्विपेत् ५७
संवत्सरस्य तस्यापि दिश्याग्नेय्यांततः शुभम्
अग्निकुंडं विदिक्कोणे तदेवजपुरसम्मितम् ५८
आर्यादि तीर्थ सहितं निखातं द्वादशांगुलम्
विस्तृताष्टांगुलं तीर्थं कुर्यात्प्राक् प्लवमुत्तमम् ५९
आर्यादिकतीर्थम्
कुंडादष्टागुलं न्यस्य चार्याम्यदर्भसमेनकम्
विज्ञः सप्ताङ्गुलैश्चैव पारियात्रमथोत्तरे ६०
यैः सहैव खखोल्कस्य पूजा निगदिता शुभा
वह्निरूपः स तैः सार्द्धं ध्येयः स्वहृदयेन तु ६१
ब्रह्मतो वरुणाभ्याशे प्राङ्मुखे सुक्स्रुवौ न्यसेत्
इष्टांगानि तु सर्वाणि गुरोर्नत्रमृतभागतः ६२
अद्मीणाग्राः कुशा ह्रस्वा लूनाश्चैवोपमूलतः
शस्यं ते हरिता हृद्याः सर्वेषु रविकर्मसु ६३
अग्निगर्भस्य चांतेषु प्रागुदक्कूलकान्दुशान्
न्यसेत्समंहात्सर्वेषां ब्रह्मादीनामधस्ततः ६४
चतुर्विंशतिरंगुष्ठ परिमाणं स्रुवस्य तु
तस्याबुद्धरणाग्रस्य न तमंगुष्ठं समितम् ६५
तदर्द्धांगुलं पात्रिमानं पापिपात्र तलोदरम्

वृत्तं तस्यापि निर्दिष्टं सान्तध्नं गुलमेव च ६६
रक्त चन्दनकाष्ठेश्च खदिराश्वत्थं किंशुके
अन्यैश्चैवापि जतीयैः कर्तव्यं सुकूसुवादिकम् ६७
काष्ठैरमीभिः कर्त्तव्यं मुशलोलूखलं तथा
चमसश्चैव तत्रापि मुशलं द्वादशांगुलम् ६८
उलूखलं तु दिक्संख्यं खातं च चतुरंगुलम्
चमसवर्णसंख्यातं खातं ह्यर्द्धांगुलं तथा ६९
पुच्छं षडङ्गुलं तस्य विज्ञेयं परिमाणतः
दन्तकाष्ठन्तु शिष्यस्य ललाटेन तु सम्मितम् ७०
अर्कस्य समिधः काष्ठं द्वादशांगुलमापतम्
अवक्रं सत्वचं चैव सार्द्रनिष्पाणिकं तथा
उपवीतं कुशमयं कर्त्तव्या मेखला त्रिवृत् ७१
समा शुक्ला च मौंजी स्याद्वर्हिजा बिल्वजा तथा
अविछिन्नशिखाजालः सर्प्पिः कांचन सन्निभम् ७२
स्निग्धः प्रदक्षिणावर्तो वह्निः सिद्धिकरः स्मृतः
उलूखलैःततस्तस्मिन्क्षोदयेच्चतुरंगुलम् ७३
खखोल्कमूलमंत्रेण मुशलेन समाहितः
नवोपपानं तु शिखया पंचषा तंडुलेन च ७४
मूलेन चैव शमयेत्षायसं चतुरंगुलम्
प्रवेश्याः प्रयताः शिष्या ये पूर्वमधिवासिताः ७५
लिखितं स्याद्यमुद्दिश्य तं तं च पूर्वनिवेशयेत्
सोष्णीषं वाग्यतं दान्तं सितचन्दन चर्चितम् ७६
अचंचलोज्वलकरं सितवस्त्रविभूषितम्
गवां पुच्छेन सलिलैः खखोल्का हृदये न तु ७७
अभिषिंचेद् गुरुः शिष्यं ततस्तैः पापनाशनैः
प्रदद्याद् गुरवे शिष्यो गां वत्सेन समन्विताम् ७८

चारुरूपां समाधानां हेमस्त्रग्वस्त्रभूषिताम्
सितवस्त्रावृतखुरां द्वारेणाप्यानयेत्सदा ७९
प्रवेश्य यष्ट्याः पुरतः स्थापयेत्सुसमाहितः
कायिकं वाचिकं चैव मानसं च हरेद्गुरुः ८०
पापं हि त्रिविधं तस्य खखोल्कहृदयादिभिः
पुष्पैरंजिलिमापूर्य जानुभ्यां धरणीं गतः ८१
खखोल्कमिति मंत्रेण कमले प्रक्षिपेत्तदा
पद्मस्य यस्मिन्देवाग्रे प्रक्षिप्तं कुसुमं पतेत् ८२
एतस्य कुलदेवः स्यात्सद्यस्सर्वार्थसाधकः
उत्पाद्य मुखबन्धन्तु दृष्ट्वाहं संसमन्ततः ८३
खखोल्ककुलदेवस्य प्रणमेद्यत्नतः क्रमात्
पद्मरागेण हेम्ना वा युक्तं सर्वान्निदेशयेत् ८४
ऐशानीं तु दिशं नीत्वा गुरुः शिष्यं कुशासने
उपवेश्य ततोदद्यान्नृपतिर्यजनानि तु ८५
कुशाग्रेण समादाय कलशेभ्यो गुरुर्जलम्
पूर्वाननं खखोल्काग्रेः शिष्यं तमभिषेचयेत् ८६
अभिषेककाले तस्याथ ब्राह्मणास्तु यथा क्रमम्
तत्र त्रिषूयेतेषु देवेषु त्रिशिक्षां परिपाठयेत् ८७
अस्य वासोद्वयमिति उदुत्यं च निधापयेत्
आकृष्णेनेतियजुषामष्टौ व्याहृतिक त्रयम् ८८
आदित्यव्रतसंज्ञं च शुक्लं वस्त्रं च सामसु
सामभिश्चाभिषिंचेयुः सर्वे संयतमानसाः ८९
ततोऽग्निनिकटं गत्वा मन्त्रेण हृदयेन तु
कुशेनात्य तं शिष्यं होमं कुर्याद्गुरुः स्वयम् ९०
गर्भाधानं पुंसवनसीमन्तोन्नयनं तथा
जातकर्म तथा नामकरणं चाशनक्रियाम् ९१

चूडोपनपनं पानीयं च ऋतूनापि
कुशेनाङ्गपरामृज्य कुर्य्यादवसेथे हृदा  ६२
सकुशेन तु हस्तेनच्छित्वा शिष्यशिखां गुरुः
घृतप्लुतां दहेदग्नौ मूर्द्धादिन्निप्तकारणात्  ६३
परामृज्याथवार्मूर्ध्नितथैव जुहुयात्कुशान्
पाक्संस्थां हविः संस्थां होम संस्थां च कारयेत्  ६४
प्रागुक्तेनैव विधिना ततः शुद्धेन सर्पिषा
शिष्यो होमं प्रकुर्वीत सुवस्नुवाभ्यां यथाक्रमम्  ६५
शिष्योऽभिमुखमातिष्ठेत्संस्पृशेत्तु गुरूं करौ
युवनानि सहादित्यं योगं कुर्याद्गुरूः स्वयम्  ६६
श्रावयेन्नित्यकृत्यादौ तथा च श्रौषडित्यपि
यागांते वषट्कारकार्यो लोकाभितर्पणे  ६७

ॐ कालाग्निरुद्राय ठःठः ॥ ॐ कालरुद्रेभ्यः ठःठः ॥ ॐ भस्म-रुद्रेभ्यः ठःठः । ॐ श्वेताधिपतये ठःठः ॥ ॐ कालरुद्रेभ्यो ठःठः ॥ ॐ पिंगलरुद्रेभ्यो ठःठः ॥ ॐ हिरणयवर्णाय ठःठः ॥ ॐ कालाय ठःठः ॥ ॐ लोहिरव्याय ठःठः ॥ ॐ रक्तपिंगलेभ्यो ठःठः ॥ ॐ अनन्ताय ठःठः ॥ ॐ पुंडरीकान्नाय ठःठः ॥ ॐ सहस्रशीर्षाय ठःठः ॥ ॐ महोज्वलाय ठःठः ॥ ॐ सज्ज्वलाय ठःठः ॥ ॐ आशीविषाय ठःठः ॥ ॐ सर्वेभ्योऽनन्ताय वरुणेभ्य ठःठः ॥ ॐ अविचये ठःठः ॥ ॐ रौरवाय ठःठः ॥ ॐ तामिस्राय ठःठः ॥ ॐ तामसाय ठःठः ॥ ॐ अधतामिस्राय ठःठः ॥ ॐ शीताय ठःठः ॥ ॐ उष्णाय ठःठः ॥ ॐ सन्तापनाय ठःठः ॥ ॐ सुप्रतपनाय ठःठः ॥ ॐ संहताय ठःठः ॥ ॐ काकोलूकाय ठःठः ॥ ॐ पद्मलोचनाय ठःठः ॥ ॐ संयमनाय ठःठः ॥ ॐ जंबुकाय ठःठः ॥ ॐ उलूकाय ठःठः ॥ ॐ व्याघ्राय ठःठः ॥ ॐ पूतिमृत्तिकाय ठःठः ॥ ॐ

कालसूत्राय ठःठः ॥ ऊं सूचीमुखाय ठःठः ॥ ऊं लोहशंकवे ठःठः ॥ ऊं त्तुरधारोपमाय ठःठः ॥ ऊं बिरीकाय ठःठः ॥ ऊं दशकाय ठःठः ॥ ऊं तप्तकुंभोपमाय ठःठः ॥ ऊं पूयशोणित प्रवाहाय ठःठः ॥ ऊं कूटपर्वताय ठःठः ॥ ऊं तीच्णशल्याय ठःठः ॥ ऊं चक्रपिंडाय ठः ठः ॥ ऊं ताच्र्याय स तुण्डाय ठःठः ॥ ऊं मेदोसृक्पूयप्रवाहाय ठःठः ॥ ऊं क्रकचच्छेदनाय ठःठः ॥ ऊं अस्थिभंजनाय ठःठः ॥ ऊं तप्तवालुकाय ठःठः ॥ ऊं पंकलेपनाय ठःठः ॥ ऊं निश्छ्वासाय ठःठः ॥ ऊं यमलपर्वताय ठःठः ॥ स्वाहाकारमंत्रेभ्यः ॥ ऊं कूटशाल्मलये ठःठः ॥

ब्रह्मोवाच

दशधा भेदभिन्नस्य भेदोद्वादशधा पुनः
तत्रास्य तव देवेश प्रशुतिर्बहुविस्तरा ९८
प्रतिविद्येषु तन्त्रेषु गतिरुक्ता परा तथा
कृत्स्नेन तपसा सिद्धिः प्राप्यते बहु विस्तरा ९९
रहस्यं परमं देव ब्रूहि तत्वार्थसिद्धये
प्रतिमन्त्र प्रयोगार्थं ध्यानासिद्धिं च तत्वतः १००
अचिन्त्यं परमं गुह्यमनुक्तं यान्मत्वया
मंत्रसिद्धिर्यतो यावत्तंत्रेस्मिन्प्रथमे विभो १०१

भास्कर उवाच

पृष्टः प्रोवाचतं तस्य सृष्टि सदसदात्मिकाम्
असतः प्रथमं जज्ञे वर्णोग्रः षोउशात्मकः १०२
सप्तविंशत्तथा वर्णाजज्ञिरे क्रमशः परे
उभयेभ्यो निनिर्मथ्य विंशद्वर्णाश्च सृष्टये १०३
आदितोमथ्यमानेषु पंचविंशादयो निजाः
परमेष्ठ्यादयः सप्तप्राणस्थानेषु निःसृताः १०४

वक्रतः पारमेष्ठ्यात्तुकारणं दक्षिणेक्षणात्
क्रियावानेक्षणात्तस्य मंत्रात्सदक्षिणात्सुतः १०५
विसजो वामतश्चास्य नासिकाप्रसवावुभौ
प्रसूतीतस्य सृष्ट्यं शौनिः सृतौ तौ यथाक्रमम् १०६
ततस्तेषां निरोधाय सृष्टिसंहार कारणम्
संसृत्याद्यानि पादानि प्रणवां तं सकारणम् १०७
मुर्ध्नि चैवं तथान्यस्य योनिशेषात्तु योजयेत् १०८
शिवयोर्निर्मिता देवी हृदयाग्रे परं ततः
कारणं दक्षिणे बार्हास्थाप्या सर्वाक्रिया तथा १०९
भुवनाधिपतिर्यस्य बीजयोनिरथोभयोः
लिंगोपति प्रसूतिं तु न्यसेत्सृष्टिन्तु पादयोः ११०
संहारं चक्रुरुर्द्धस्मात्स्यात्तां सर्वांगिनान्तथा
भूतयोनिस्थितानाभ्यां प्रेरिता विश्वसंज्ञिताः १११
जठरे संस्थितो वह्निर्जगतोऽस्य प्रकाशकः
लिंगस्यातिशयं वक्ष्ये दीर्घविस्तरणम् तथा ११२
षष्ठिरथ्योत्तराज्ञेया व्योम व्याप्य तथा स्थिताः
अर्चिषो देव देवस्य व्योमव्यापीति चाक्षरः ११३
दश कोटयोऽथलोकेभ्यो मंत्राणांजज्ञिरे प्रभो
तुल्यायते तु विज्ञेया शिवेन परमात्मना ११४
भुवनेश तथा कार्य्या शिव व्योनि प्रसूतिजः
पाताल दिशि विन्यस्य वारयंतिस्वशक्तितः ११५
शरीरं देवदेवस्य गृह्यमेतच्छिवात्मकम्
ज्ञेयं ध्येयं तथा पूज्यं योज्यं स्यात्पंचविंशकम् ११६
योज्यमेकरसंकर्म प्रोक्तं योगे मनीषिभिः
एतज्ञात्वा सुखात्सिद्धिं संदिग्धात्वन्यथा भवेत्
बीजार्थं वपुषोह्ये तत्प्रोक्तं तव पितामहि ११७

इति श्री साम्बपुराणे पंचपंचाशत्तमोऽध्यायः तृतीयं पटलम् ३ ५५

षट्पञ्चाशत्तमोऽध्यायः

तत्र तत्वानि बीजतत्वं वर्णतत्वं योनितत्वं चेति १
निष्फलं सकलं सिद्धाश्चत्वारः
पदार्थाः सिद्धाः पंचविशकभावाः २
अथास्य हृदयं वक्ष्ये गुह्याद्गुह्यतरं विभोः
ऊर्धं च सप्तस्त्रोतासि नालं द्वादशकं तथा ३
पंजिका कर्पिका तस्य मकरः पंचधा स्मृतः
केसरं षोडशन्तस्य पद्मद्वादशभिर्दलैः ४
सप्तशृंगं तथा पारं मेरु मंदरभूषितम्
योनयो द्वादशाख्याताः प्रतियंत्रं प्रतिष्ठिताः ५
एकाक्षरपरो देवो वर्णेभ्यो बीजवान्प्रभुः
तत्त्वनिम्भथनाज्ज्ञेवला साध्यर्द्धमात्रिका ६
बीजबीजादमुं प्राहुः षोडशार्धं च यः क्रमात्
आत्मा चाधकलातस्य हृदि स्थितस्य सप्तधा ७
सप्तशंगकृतैश्चैव सप्ततस्य कलात्मकम्
तत्त्वविद् बीजमेतत्स्यान्नान्यद्बीजमतः परम् ८
आदौ पंचदशं यत्तु संज्ञात्मातदयन्नतत्
सबिन्दुकाः प्लुता ज्ञेया विसर्गाश्चयथाक्रमम् ९
ओंकारान्ता अकाराद्या प्रथमेकेसरे स्थिताः
ककारादिहकारांताद्वितीये केसरे स्थिताः १०
अकारादिक्षकारान्ताः पंचाशद्यंत्रसंख्यया
एतद्धृदयपद्मस्याद्बीजयोनिकृतं प्रभो ११
ध्यात्वैतन्मुच्यते सर्वो बीजनिर्दग्धकल्मषः
विधिनादिक्षितश्चास्मिन्मण्डलेबीजयोनिजे १२

निष्कलं सकलं चैव तथा सकलनिष्कले
ध्यानं ज्ञेयं च योगश्च सर्वमेतस्य कीर्तितम्  १५
इति श्रीसाम्बपुराणे ज्ञानोत्तरे षट्पंचाशत्तमोऽध्यायः ॥
तृतीयं पटलम्  ३  ५६

सप्तपञ्चाशत्तमोऽध्यायः

तत्वज्ञानमहं वक्ष्ये बीजान्ये तान्यत परम्
अनादि निधनं ज्ञानं गुह्याद्गुह्यतरं च यत्  १
आसीदिदं संमग्र च ततानेतैदजायत
तस्माद्धर्य वशी कामो जज्ञे व्याहार संप्रति  २
विवक्षितं त्वहं श्रेष्ठं विमृतं न च संवृतम्
प्रादुरासीदवर्णे स्मत्तस्य संहारमिच्छतः  ३
सतमागाच्च जिह्वायां मध्ये प्रकृतिसंभवः
इवर्णोवर्णसंहारादुवर्णोमून्मनस्ततः  ४
तदन्ते बिन्दुसंभूतिः सर्वातः प्रभु शाश्वतः
वायोनिर्धारणात्कण्ठे हकारः सविसर्गकः  ५
अहये चोत्तरे ज्ञेयो वर्णानां संभवः स्वयम्
अवर्णो परयोगेस्या देकारस्त्वनुलोमतः  ६
विलोमतः यकारः स्यात्तधोकारवकारयोः
तृतीयो योगतो ज्ञेयो ओकारस्य तु सिद्धये  ७
ह्रस्वदीर्घप्लुता ह्येते न चोंकारसमानजाः
ऋकारक्वस्विल्कारा: स्वराजिहाग्रकारिताः  ८
इष्टावीषत्प्रविष्टो च संहतो चहनुं यदा
जिह्वा मध्यस्थनानाभ्यां हत्वोरंतरदर्शनात्  ९
ताल्वौवेकार संभूतिरकाराद्दग्धसिद्धये
आकारैकारयोरादिरीकारार्धं च पूर्वशः

तथोंकार पराशेषा एतद्विस्ता खन्नणम्
स्पर्शाश्चाथ प्रवन्यन्ते विद्या तत्त्वस्य सिद्धये १०
जिह्वामूले च हन्वोः स्यात्स्पर्शनं कादिके गणे
मध्ये तालुं स्पृशेद्यच्चवेष्टयित्वा तृतीयकाः ११
मूर्द्धन्य देवलानां च चतुर्थे शिवमूलतः
ओष्ठभ्यां पंचमस्याथ तत्वस्पर्शः स बीजकः १२
करवन्द्यपात्तस्याहेकैकावद्भवेत्ततः
दन्तमूल्यो लकारः स्याच्चतुर्थश्चोष्टदन्तगः १३
ऊष्माणश्चगतास्ता वै प्रथमामध्यमास्तथा
नपुंसकाभवन्त्येते नासिकाश्च भवन्तिहि १४
एते अनादि निधनस्य सिसृन्नोश्चाव्ययं महत्
विद्या तन्त्र विद्वद्ध्यर्थमेभ्यो योनिं चकार सः १५
अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः
षोडशस्वराः ॥ क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ
द ध न प फ ब भ म एते स्पर्शाः ॥ य र ल वा अन्तःस्थाः ॥
श ष स हा एते ऊष्माणः ॥ क ख ग घ एते यमाः ॥ न पु स
काश्चतृतीयध्याये सुतत्सिद्धम् ॥
इति श्री शाम्बपुराणे सप्तपञ्चाशत्तमोऽध्यायः बीजोत्तरे चतुर्थपटलं
समाप्तम् ४ ५७

## अष्टपञ्चाशत्तमोऽध्यायः

स्वरावाद्यौ चतुर्थाश्च ऊषा च प्रथमं तथा
चत्वारश्चोत्तरं ज्ञेयास्तृतीयाः स्पर्शसंज्ञकः १
द्वितीयांतश्चतुष्कच उत्तमश्चतथैवतु
चतुर्थ त्रय मेवस्यात्तृतीयोद्धौतथैव च २
द्वितीयाद्यस्य चत्वारस्तृतीयस्यादनुनासिकम्

पंचमः प्रथमश्चस्यात्तयास्यादनुनासिकम् ३
चतुर्थो ह्यष्टवश्चैव योनिः साहिसु सृष्टये
चत्वारो स्याद्धिवर्णाः स्युर्द्दीपिताबिन्दुभिः स्त्रिभिः ४
द्वीपिनीबीजिनीह्येषा पावनीस्वरसन्ततिः
नित्यमेषानुजप्तव्यापरं निर्वाषमिच्छता ५
आहावहवो हवाभवे चारिणीपरमशक्तिना
तन्त्र इति स्थितोभूमिमहाभूत इतरेतरचौम्बचुम्ब-
एषा सिद्धा चत्वारिंशदक्षरा योनिः ६

इति श्री शाम्बपुराणे अष्टपञ्चाशत्तमोऽध्यायः
ज्ञानोत्तरेबीजस्वरप्रसवे पञ्चमं पटलम् समाप्तम् ५ ५८

## एकोनषष्टितमोऽध्यायः

पञ्चविंशतिभिर्नाम सप्तधाक्रमशस्तथा
प्रणवादित्रिधाभिन्नं तस्मिन्नेव पदे उभे १
प्रणवादिर्नमोंतस्थः प्रसवः सप्तमस्तुसः
एषामादिपदंयत्स्या द्वितीयां चैव योजयेत् २
तथा चादिपदैस्तत्त्वं प्रैलोमो विधीयते
योनि मुख्यानि यानिस्युः सर्वसृष्टि प्रवृत्तये ३

इति श्रीसाम्बपुराणे एकोनषष्टिशत्तमोऽध्यायः ज्ञानोत्तरे बीजस्वर
प्रसवे षष्ठं पटलं समाप्तम् ६ ५९

## षष्टितमोऽध्यायः

ध्यातव्य एष यत्नाद्यः सेवतेह्यखिलं सेवतेह्यखिलं जगत्
आहावहोहवाभवेचारिणिपरम शक्तिरात्मातन्त्र इति स्थिते १
ऊं अं उं इं ऊं व्योमव्यापिने । अनुषंगेण सप्तानां यष्पासंख्येन-
संपुटः । पादांतस्थबीजाख्यायोनयः । ऊं अं व्योमव्यापिने

ऊं इं स्रां व्योम ऊं स्रां ईं ऊं व्यापिनेव्योम ऊं इं स्रं ऊं स्रां ईं
स्रं ऊं ।
व्योमव्यापिने भूतिरितरचुम्बचुम्ब
वर्णायाः प्रभृतितस्यान्मयोक्ताविस्तरतः २
कालात्मनः प्रसूतिन्तेमंत्र राजस्यमुक्त्यर्थं
वद्त्यंतेथोयथाशास्त्र विनिश्चयः
चक्रंत्रिनाभ्यं तत्सर्व संवत्सरमिति प्रभुः ३
द्वादशारंतुतन्मनसौप्रत्ययश्चार्द्धमसिकः
त्रीणिषष्टिशतान्याहुरहोरात्राणिशंकरः ४
कला मुहूर्ता दंडाश्चनिमिषास्तु प्रतिष्ठिताः
तद्वूर्धन्नातिविश्वात्माव्यंजयच्छब्द देहिनाम् ५
सप्तकः पंचभिर्युक्तः परितोबिंदुभिर्युतः
पुनः षोडशभिर्नद्धा त्रिनामीत्युच्यते बुधेः ६
द्वितीयं सप्तभिः प्रोक्तं परं यच्च प्रभाषते
नाभिगर्भे स्थितं सप्तयोनिविष्टभ्य शूचिकाम् ७
त्रिशतंनवभिः षडर्कवर्णास्ते स्वके स्थिताः
ग्रहनद्मत्रगर्भान्ता योनिविष्टपूर्विकाम् ८
त्रिंशतं नवति त्रीणि गणनाकीर्त्यतेऽधुना
स्रारेषु शब्दाः पर्याप्तास्तेषु विंशत्प्रतिष्ठिताः ९
चतुर्विंशति संख्यकावर्द्धपस्तेषु चार्पिताः
भेदाः षोडशप्राप्तैषां द्विधायोनिश्चमध्यमा १०
त्रिशद्द्वेष्टद्याः प्रोक्ताः पंचानां द्विगुणापदैः
विद्येश्वरप्रसूत्यर्थं लद्मामध्ये भजेत्तथा ११
कारिकापरशुशक्तिरेतेसप्तहृदयेसिद्धाः । ऊं स्रां ईं ऊं
व्योमव्यापिने ऊं एते पंचविद्येश्वरप्रस्तावेसिद्धाः । स्र स्रा इ ई उ
ऊ ऋ ॠ ऌ ॡ ए ऐ स्रो स्रौ स्रं स्रः । एतेषां शडतत्वज्ञानेसिद्धाः

॥ क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ
ब भ म य र ल व श ष स ह आकारासिताः स्पर्शज्ञानेसिद्धाः ।
त्रयस्त्रिंशत् । आहवप्रतिमध्ये आसनंबोद्धव्यम् ।
एषाप्रधिप्रथमासिद्धी । ऊं ऊं ऊं
ऊं द्वादशेष्वपि बोद्धव्यः केवलं वर्णभेदः । पृथगेषामेषा भवति
अतः प्रसिद्ध प्रकृतकारणात् ॥

इति श्री शांबपुराणे षष्टितमेऽध्यायेज्ञातोत्तरे सोमसूत्रे
सप्तमं पटलम् ७ ६०

एकषष्टितमोऽध्यायः

त्रिनाभ्यसन्तसंभूतं बीजिनं प्रथमें वदम्
प्रति मध्येषु सर्वेषु स्थितं यत् परमं पदम् १
संपृक्तौ वायव्यै शान्यामोंकारेण प्रदीपितौ
अकारान्तो मकारः स्यादिशि सर्वत्र निष्ठितः २
पूर्ववर्धवदीर्घान्तोनैर्ऋतिंदिशमाश्रितः
इकारान्तः पकारोऽथ वायवीदिसमाश्रितः ३
एकारान्तो नकारः स्यादेषान्याधिष्ठितो वहिः
आद्यौ वै दक्षिणस्तस्य द्वितीयस्तस्य दक्षिणः ४
पुनरष्टौ स्थितां बाह्यान्मकारस्तु द्वितीयके
ऊकारोवातथारेकस्तृतीयं पद्ममाश्रितः ६
बिन्दुरेवमधः पूर्वपद्मं च पूरयेच्छुभम्
पूर्वपद्मोयथा ह्येषतद्वदेवीत्तरो भवेत् ७
भेदस्त्वक्षरयोर्नस्यादक्षरे तस्य निश्चयः ८
अकचटतपयशवर्गा ॥ आवह अधस्ताद्योमभयमुपरिष्टात् ॥
ऊं उवयअम ॥ आवयइम ॥ तनरचयअम ॥ उवय ॥
अमयजरआय ॥

अ प अ स अ ख आ वयषोडशत्वं व्योमव्यापिने व्योम व्योम
रूपाय सर्व व्यापि पूर्वपक्षः सिद्धः ॥ प्रथमा अपि ॥
एनसावास्तु विज्ञेया मध्यमस्य विदिक्रा स्थिताः
इकारांतोयशौचा पितज्ञारपुरुषः स्मृतौ ६
ऐकारो थस्वरश्चाद्यौ नकारो बिन्दुदीपितः
दीर्घातः प्रथमस्तस्य पश्चाद्यश्चायतश्चन १०
थकारश्चयकारस्यात्प्रवृत स्वरास्य च
नकार आयतत्वेन विसर्गः सर्वतो मतः ११
यद्वा अधस्ताद्योनमअयमुपरिष्टात्
भाषायेन इशाम्बवं अयआनषोडशोविसर्गः
व्यापिने शिवाय अनंताय अनायाय अनाथो मधुमासः । प्रथमो
रसिद्धाद्वितीयाप्रधिः । रेफास्तस्यः प्रकृत्यं तस्तकारो दीर्घसंयुतः
पश्चात्स्याद्धस्वउकारो बकारश्च तथामतः १२
साधशान्ताः शासस्तस्युर्यश्चेर्वोकारदीपितः
गयठः सस्वविद्वना इकारांतो द्वितीयकः १३
अकवटतपशान्ताः सर्व द्वितीयेचाहवाराअधस्ताद्तोमअयमुपरिष्टात्
इशरआतअयडधरआवअमः आशः अशव आत अय उय
अगइय अठ असमाषोडशस्थितायध्रुवाय शाश्वतात योग्पीठायः
सिद्धातृतीयाप्रधिः ॥ स्वाध्यस्थाः स्यात्प्रकृत्यन्त आपस्तस्यतथाय
तः ।
यनित्यं योगिने चेत्वे विज्ञेयाः स्युर्यथोवतवत् १४
आद्यायतोयकारः स्यान्नाहताश्वस्वरेण वः
अंतरंचनमस्कारो विसर्गश्चान्त्यतः पदे १५
विद्वन्तः पूर्वपक्षोन्नं विसर्गश्चोत्तराध्रुवः
वसन्त एष विज्ञेयस्त्वग्रेग्राष्मादयः शुभा १६
हवो अहवा अधस्ताद्योनम अयमुपरिष्टात् ॥ इशयः आतअयइनत-

प अयउपज्ञा मम ॥ आषयआसा अर च आर अय षोडशी
विसर्गः स्थिताय परित्यागिनेध्यानहा राया ऊं नमः सिद्धाः
चतुर्थीप्रधिः
द्वितीयान्तः माधवोमासः ॥ वसंतर्तुः । विसर्गवास्तुमः मुक्ले
प्रकुत्यन्तः शावयुतः ॥ स्वरवंतोयशोज्ञेयोरेफाद्यन्तापर्योस्मृतौ ॥
भकारान्तो वकारस्तु प्रसवौ सर्व दैवहि ।
यश्चेज्ज्ञान स्तथान्त्रश्च स्पृष्टो दिष्टः सबिन्दुकः १७
अकचटतपयशा भवेदधस्ताद्व्योम अयमुपरिष्टात् ॥ अम इष
आवअपअयअर अपर अंभअऐवइश आय अय इ आस अगइषो
शत्वम्
ऊं नमांनमः सर्वप्रभेव ईशानाय असिद्धापंचमीप्रधिः ॥
उकारो दीपितोमः स्याद्रेफादिन्द्रायुधोधनुः
स्वरवन्तौयतौ तेनयुयुक्त्यनुतथा भवेत् १८
स्वरवंतौपचौकादिरेफान्तश्चयथा पुनः
पश्चात्त्वाद्योतविज्ञेयो हृदयश्च यथोदितः १९
भवेदधस्ताद्व्योमअयमुपरिष्टात् ॥ यम आरदधनअयः अतत-
उपडःअसः अव आकतर अयअउधअरऋहअदः षोडषोविसर्गः
मूर्धायतत्पूरुषाय व्यक्ताय अधोर हृदयाय च ॥ अतस्तृतीयोरः
शक्रोमासः सिद्धाषष्टीप्रधिः
असौययतोन्यश्चह्वस्वोषचायतो यतः
मदमामध्यमेकाराद्बुकारेणैवदीति २०
अदीर्घश्चैवदीर्घः स्यात्स्ववन्तोयततः
दकारादिर्यतुश्च स्याद्दीर्घोयस्तः स्वरेण च २१
उकार वान्मकार स्यात्स्वरवन्तोयततः
यद्देहन्ते च विन्दुः स्यात्पद्मे शुक्ले तु पूजितः २२
इ क च ट त व यशाः चारिपि अधस्ताद्नोयमअपमुपरिष्टात् ॥

आय अय आच अमय पदअववऊ आइ यअजअसउदयआय अत
उम अरतः पायवामदेवगुह्यायसद्योजातायमूर्त्तये ॥ असिद्धा
सप्तमी प्रधिः ॥
ऐकारान्तोयकारः स्यादक्षरं परमंपदम्
नकारोमौनमश्चस्यात्ततोगाभ्याद्रकारवान् २३
हीद्यायतश्चयस्तस्मादिकारान्तस्तथैववत्
आवेद्विघ्विपुनर्यश्च गतकान्तः स उत्तमः २४
पकारान्तौसरेकौद्वौतदन्ते स्वर एव च
तावेतौग्रेष्मिकौंमासौं नमोन्तः संप्रवक्ष्यते २५
चारिणि अधस्ताद्व्योम अयमुपरिष्टात् ॥ पेषं ऊं ङअन ऊं
ङमअम अम ङगमाहयहत गमाहयः ऊं ङयस्तत्तरः अषोडशो
विसर्गः ॥ ऊं यः ऊं नमोनमो नमः गुह्यातिगुह्यायगोप्तेन शा
चतुर्थो चः ॥ शुचिर्मासो ग्रैष्मऋतुः सिद्धा अष्टमीप्रधिः ॥
हकारान्तो नकारः स्याद्वस्तुतआयतः स्वरः
स्वखतौयशौतश्च रेफादीरोयुतश्च यः २६
गोदीर्घाधः प्रकृत्यन्तः ककारस्तच्च दीर्घवान्
यकारः स्वर वान्जादियश्चैवोकारदीपितः २७
हकारान्तस्तथाकारोरेफ उकारवांस्ततः
विन्दुत्यदोज्ञेयोनभस्यः पूर्वपक्षकृत् २८
अकचटतपयशा आत्मतन्त्रे ॥ अधस्ताद्व्योमअयमुपरिष्टात् ॥
हेनअध आरी अपअसा
रवउपआगहेधसकआतऔपउजयहेतउतनिधना-
चसर्वगोधकृताकष्टोतिस्पसिद्धानवमीप्रधिः ॥
षोडशर्चपरोदीर्घः पकारः स्यात्पराश्चये स्वरोदीपितः
आद्यश्चचेन्यान्नास्युश्चशुश्चैकारेणदीपितः २९
व्याख्यातौवेनमस्त्वेषयथाववल्लक्षणान्वितः

नमश्चैवोच्यते भूयोयथा वर्णो यथाक्रमम् ३०
आत्मतन्त्र अधस्ताद्व्योमअयमुपरिष्टात् ॥ आय
अयअयअरआयअयन्तर अपअपमअतअनएवविसर्गः षोडशः ॥
अजायपरमेश्वरपरायअचेतन अपंचमोनभोमासः सिद्धादशमा प्रधिः
स्वर एवास्तुतवनव्योम्निस्यात्सानुनासिकः
पुनः सत्यश्चदीर्घश्चपश्चात्स्यादिनं कारवान् ३१
अयमेवमथाप्रमेयस्वरे फउकारादीपितः
पूर्ववच्चयकारः स्यात्तत्सर्वं पुनरेव तु ३२
अकचटतपयशान्ता इति स्थिते ॥ अधस्ताद्व्योमअयमुपरिष्टात् ॥
अव अनउवय इवनआवयइयनआवय इयन अधर षोडशो
विसर्गः । तेनव्योम्नि अव्योम्नि अरूपिन् ॥ अरूपं सिद्धा
एकादशी प्रधिः ॥
परेपिन्यश्चरेकान्तः स्थश्चस्यात्स्वरवांस्ततः
मकारः प्रथमाश्चेत्स्युस्तेजश्चवविसर्गवान् ३३
यो योऽन्तस्थः प्रकृत्यन्तो विसर्गश्च पुनश्चतो । नभस्व एष
व्याख्यातो वर्षाख्यश्च ऋतुस्त्वयम् ॥ इनस्त्विये अधस्ताद्व्योम-
अयमुपरिष्टात् इयनअपरअधअमएतअयऐतअपद्रतः षोडशो विसर्गः
यिनः प्रथमः ॥ तेजः ॥ ॐ ज्योतिः ॐ षष्ठोवः नभस्योमासः ॥
चर्षाख्य ऋतुः ॥ सिद्धाद्वादशीप्रधिः ॥
इषआदिगकारः स्याद्भूयाच्चतदनन्तरम्
अश्चलोलग्न ऐकारं आद्यः स्यात्तदनन्तरम् ३४
धुकारश्चयआद्यश्चयस्मेशाद्यस्तथैव च
अकाराद्दिपितो नः स्यादश्चैकारेणदीपितः ३५
कचटतपयश भूतिरधस्ताव्योमअयमुपरिष्टात् ॥ अदुरः अयम-
अनअगनअभवअमअअभय समम अ आनष
ऐषोडशतत्वअरूपअनग्नेअधूपअमस्य अनादियं सिद्धात्रयोदशी प्रधिः॥

दीर्घानकाराश्चत्वाराधूकराश्चतथैव च
ऊकारान्त समोज्ञेयः सोक्षरोभयदीपितः ३६
पुनर्विसर्गरहितोऽस्ववसुविसर्गवान्
अक्षरश्शोथवक्रान्तो विसर्गेण विभूषितः ३७
भूरधस्ताद्व्योमअयमुपरिष्टात् ॥ आन आन ऊध ऊध ऊं ऊं
रभऊभ ऊं आवसः षोडशः ॥ ना ना ना ना धू धू धू धू ऊं भुवः
ऊं स्वः आसप्तमोरसः इषोमासः ॥ सिद्धाचतुर्दशीप्रधिः ॥
ऊर्जस्योर्क आदिः स्यान्नद्रेकरेण दीपितः
स्वरवन्तौ धनो भूयोनिधौनः परिकीर्त्तितः ३८
ओंकारान्तोनकारस्याद्धादिर्भोवस्वरान्वितः
प्रकृत्यासोमकारश्च शकारो विन्दुरेव च ३९
अकचटतपयाशाः महीरधस्ताद्व्योमअयमुपरिष्टात् ॥ आइन
अधः अम इन अध अन इन अधः ऊं न अदभअवइश अवः असषो-
डशतत्त्वं अनिधननिधानोमूदवशिनशः ॥ सिद्धापञ्चदशीप्रधिः ॥
रेपसूर्वोदकारस्यात्परो स्वरेण मानवः
आदिर्मध्याह्नकारेण मकारश्चस्वरान्वितः ४०
पकारादीपितोहश्च साक्षाद्दीर्घैरमाततेः
हकारअपतोदस्यादेकारेण तु दीपितः ४१
वः स्वः स्यात्स्वरवान् श्चदकारोभयतस्तथा
अन्तवसीशरेखा लक्षणतश्चशरदृतुः ४२
महाघस्ताद्व्योमअयमुपरिष्टात् ॥ अरचअपअरआमअत मनपअस-
वअरअयआहयत अवअसआद्यः षोडशो विसर्गः पूर्वपरआत्मने
महेश्वर महादेवरामा अष्टमोदीरः ॥ ऊर्जोमासः ॥ शरदृतुः ॥
असिद्धाषोडशीप्रधिः ॥
एकारान्तः सहेवः स्यात्तरादिस्तुछांतवः
नमोदीर्घोहकारः स्यादेकारेण तु तत्सह ४३

स्वरवान्वैजकारोद्वयशोकारेण दीपितः
गत्रायतः प्रकृश्नावयकारस्तच्चपूर्ववत्  ४४
वमव्योमाधुकारेण दीपितो तु स विन्दुको
विद्वन्तः शुक्लपक्षः स्याद्व्योमन्तः स्यादिरुच्यते  ४५
भूम्यधस्ताद्व्योमअयमुपरिष्टात्  ॥  ऐवअसरअनअम आह
ऐतअजआय आग इव अव उम षोडशतत्त्वंचेश्वरम्  ॥  हातेजावा-
योगाधिपतये मुंचमांच  ॥  असिद्धा सप्तदशी प्रधिः  ॥
चकारादिम शुक्लेयस्याद्रान्तो यौमधोततः
पुनरेतेशकाराफो दीर्घाभूयउवक्तौ  ४६
स्वरवतो च मौदिस्तौ विसर्गश्चातिमेपदे
सह ऐष समाख्यातस्सहस्यः सूर्यसंततः  ४७
भूम्यधस्ताद्व्योमअयमुपरिष्टात्  ॥  अव अपर अम अल अपर
अल अप अथ अश अर च अम अर अवषोडशोविसर्गः  ॥  वः
प्रथमः ऊं सर्व ऊं भवः ऊं अनवमोनः सहामासः
सिद्धष्टादशीप्रधिः  ॥
भं आदिर्वओंकारान्तोदादिर्भः स्यात्स्वरेणवः
शकारोवश्चरेफांतो द्विरकारान्तोंन्ततस्तथा  ४८
उकारवान्सश्चषोथरेफान्तः पादशो ततः
रेफाद्दीर्घः सदीर्घातः शुक्लोयं बिन्दुदीपितः  ४९
कचटतपयशा इतरेतरव्योम अयमुपरिष्टात्  ॥  भ ऊं थ अदव-
अरअसअरवउभ अत अस अश्व अपर अदअस आखअसषोडशत्वं
भवोद्भवसर्वभूतसुखप्रदसर्वसाध्यसिद्धः एकोनविंशति प्रधिः  ॥
चरेद्व्रतं सुसिद्धयर्थं यथावक्ष्यामि तन्त्रजम्
प्राणयाम सहस्त्रं तु बीजतत्त्वेन धारयेत्  ५०
पञ्चाग्निभिः शिवेरङ्गैः स्य द्रूतो निलभक्षणः
त्रयहंत्र्यहंत्रिकंप्यस्तंजपेत्ता वेजलेक्रमात्  ५१

गुर्वाज्ञयाभस्मसुप्स्यान्तधमाहं पदमस्तके
भुजीताथोचितं भक्ष्यं योगस्यास्य सदाविधिः ५२
चरित्वैतद्ब्रतं पुरायं मुच्यते सर्वपातकेः
पूज्यते सर्वसिद्धैश्च ज्ञानं चास्य प्रवर्तते ५३
येभवन्तिहिवेदोषाः सधनेदिव्य मानुषाः
शरीरजास्तथारागानश्यं तितेन वैध्रुवम् ५४
भूतव्रतातं सिद्धर्थमेकां ते तु मनोरमे
आत्म तुल्य सहायः स्याद्बीजनिर्दग्धकल्मषः ५५
एकादशानिजव्याधिर्बोद्धव्यांगुष्ठमस्तके
ललाटे तेन संपीडयसर्वविघ्नान्निवारयेत् ५६
आहारार्थं च सर्वेषां च रेत्सम्यग्यथाक्रमम्
वारुणेसलिलाहारं शुक्त्यजाक्षीरपोऽपि वा ५७
शक्तस्यजपतस्तस्य विघ्नान्येतानि लक्षयेत्
मेघानांस्तनितं विद्युद्वृष्टिक्षोभश्च सागरे ५८
मत्स्यादयश्च दृश्यते व्रते वारुसंज्ञके
कापिलंघृतमाग्नेयेभुजतो व्रतमाचरेत् ५९
सर्वमादीप्यते तस्य शुक्लार्द्ध च तथोदकम्
वायव्ये निलभक्षः स्याच्छक्ताजाक्षीरभुग्यथा ६०
विघ्नं पात्राशने पातो वातक्षोभश्च दारुणः
आशोकं गोर संपीत्वा ब्रतमेतत्समाचरेत् ६१
विघ्नं सर्गस्य संपातोज्योतिषां पतनं तथा
भूतनाभिह्नसर्वेषां मशवतश्चरितुं व्रती ६२
भूतयोव्रतं कुर्यादिषामन्यत मेन तु
व्रतेन मासंसिद्धांयामस्यां सिद्धाभवन्तिते ६३
हन्यादेतेन वैरागान्दिव्यान्मौमान्स्वदेहजान्
एतदेवव्रतंकुर्य्याच्छांति कर्माणिन् मन्त्रवित् ६४

व्रतंवैवस्वतं कुर्वन्छाकाहारोभवेन्नरः
साध्यानृषीन्वसूंश्चैव पश्येत्सर्वानशेषतः ६५
विघ्नप्रशमनं प्रोक्तं सर्वमन्त्रविधिस्त्वयम्
मध्येध्यायन्जयेन्मंत्रन्तत्त्वस्यहृदयस्य च ६६
दृढासनः स्थिरमनाजितवायुर्जितेन्द्रियः
मुख्यासिद्धिमवाप्नोतितत्ववाजप्रसूतिजाम् ६७
इति श्री सांबपूराणे एकषष्टितमोऽध्याये ज्ञातोत्तरे शरीरसाधनं अष्टमं पटलम् ८

द्विषष्टितमोऽध्यायः

सिद्धयेसर्वकार्याणां विधानमभिधीयते
संपुटानां यथा तत्वं कर्मणां सिद्धयेपि च २
सकलीकृत्यदेहंत्वं प्राणायामश्चयोजयेत्
शिवाख्यांवरमाख्यांचयोनिंहृन्नाभितस्तथा २
वायुरग्नेरधस्ताच्चसंहरन्सहपातकैः
अंतरेप्राणमायच्छेत्सद्यः सिध्यति योगवित् ३
ब्रह्मतत्त्वास्त्रिभिशोध्यापद्यतेन शुभं भवेत्
परस्यापिदहेन्मत्रीग्रामंनगरमेव च ५
व्याधिं चापिदुखबाधां तनूत्थां दैविकांतथा
निहन्तितत्रतूर्णं च दिवाकरब्रतीनरः ६
बीजयोनिर्मवन्मध्येपृथिव्याश्चारुणस्य च
पूर्ववद्यानयागः स्यात्प्राणयोगस्तथैव च ७
तेषामध्ययनेचैव ये पूर्व चैव साधिताः
शान्तिं चैतां प्रयुंजीतकृतकृत्योभवेत्तदा ८
द्रव्यापहरणेवापिन्यासनिर्यातमेपि वा
नाशने चैवदेवानां ग्रहोत्पादनकर्मणि ९

कुवन्नेतानियोगीस्याद्वायुरग्निमिवेन्धनम्
परस्थानां च सर्वेषामपाहाः प्रयुज्यते १०
एषसंहरतेसर्वं यत्किंचिज्जगतीगतम्
आरूढः संशयेयुंजन्नान्यथातु कदाचन ११
सतु होमस्तथाप्नोतुयदारोगेण युज्यते
तत्क्षणाद्धन्तितान्सर्वान्सरोगान्धान्तुयोनिजान् १२
स्थावरं जंगमंवापि कृत्रिमं चापि यद्विषम्
क्षणान्नाशयतिह्येषः यदि सम्यक् प्रयुज्यते १३
संक्रमेण तथा व्याधिविपरीतेनयोजितः
चिकित्सामन्त्रपूर्वेणक्रीडार्थमनुयोजयेत् १४
ध्यायेत्तुवारुणेवायुंशांत्यर्थं शिवसंपुटे
वृष्टिं कारयतेह्येष भूतयोनि सबाजकः १५
षड्विधं च सृजत्यस्थ भूतसंहारिणस्ततः
वायुनावेष्टयेत्सर्वस्तमितंस्याज्जगन्महत् १६
अश्वानान्तुजपेन्मंलंयोगिनां च गतिं तथा
निरुन्ध्याद्यद्यदीक्षेतव्रणव्याधिविवं च यत् १७
ध्यार्यश्चहोमयेन्नित्यं युक्तोमन्त्रार्चनेनरः
उद्घाटने च संहारे योज्यश्चापि दशात्मकः १८
सर्वत्रवेष्टनं कृत्वा ततः शान्तिं प्रयोजयेत्
परमपुटमध्ये तु द्रव्य मन्त्रेण योजयेत्
असन्देहेन सिद्धेतबध्वा मन्त्रविभागसः १९
इति श्रीसाम्बपुराणे ज्ञानोत्तरे द्विषष्टित्तमेऽध्याये नवमं पटलम् ९

## त्रिषष्टितमोऽध्यायः

साधकस्येहयुक्तस्य व्याधिर्भवतिदारुणः
उपसर्गः समंतस्य चिकित्सास्यन दुष्यति १

धातुरेकोग्रहोवापि कोष्ठेत्वध्यासितोपिवा
स्मृत्वायोमनसापायोमंत्रकैर्न प्रशाम्यति २
क्षेत्राच्चांडालसेनायाश्चामिहोत्रगृहात्तथा
तस्मादपंचतत्तूर्ण मासवैद्ये प्रकल्पयेत् ३
क्षेत्राच्चांडालसेनाच्चतथाद्विजपरा अपि
क्रमवृद्धं च तत्सर्वेबघ्नीयान्मिश्रितं क्रमात् ४
तिस्त्रः पोटलिकाः कार्यास्सूतिकर्पटकेन च
समार्जनतटेचैव आरभेतचरोः क्रियाम् ५
अन्यजानांगृहस्थैश्चश्रपयेत्तंडुलेश्चताम्
ध्यायन्वैपातकं धोरं संपुटंयदि दारुणम् ६
यावच्चश्रयतेवह्नौतावद्रोगः प्रणश्यति
खदिरेप्यतथाशूलेचैकवृद्धयाक्रमंगताः ७
बद्धाः पोटलिकाः सर्वापप्यापूर्वमवस्थितः
वरुणेत्वाकृतिं कृत्वाद्धुरकृत्तांतुहोमयेत् ८
रूधिरं चाविषं तैलमाहुत्यन्तेतुदीपनम्
अन्येपोटलिकेद्धेतुजुहुयाच्छूल लक्षिते ९
भागंबद्ध्वा तृतीयन्तुचरोः कर्मसमारभेत्
निवेद्यचबलिं तेनस्नायाद्रोगान्निहंति सः १०
तत्क्षणाच्छुद्धिमाप्नोति चन्द्रवत्परिनिर्मलः
हत्वारोग्सहस्राणि ततः साध्यांश्च साधयेत् ११
शरीरान्मनसश्चैवयेतुरोगाः सुदारुणाः
पातकान्घातयेत्सर्वान्कृतज्ञः साधु समतः १२
राजाविप्रस्तथावर्णाः साधनार्थ प्रतिष्ठिताः
आपत्सुघातयेत्तीव्राविधिनाघातकाः स तु १३
विनायकाहरन्त्येतेरूपैः सिद्धैश्चमंत्रिणाम्
न दोषेघातने तेषामितिरुद्रः प्रभाषते १४

इति श्री साम्बपुराणे ज्ञानोत्तरे त्रिषष्टितमोऽध्यायः
दशमं पटलं समाप्तम् १० ६३

चतुःषष्टितमोऽध्यायः

अभिचारविधिं श्रुत्वा मंत्र सर्वार्त्तिनाशनः
अधः शूलान्गृहान्क्रूरानभैरवांश्च महाबलान् १
महामारी कूलोद्भूतानुत्सादयति मंत्रवित्
यमजिह्वां मृत्यु भूतया घोरां चापियोजयेत् २
प्राह्नंतु महारौद्रंशत्रु पक्षभयंकरम्
कुर्यात्तु कंटकं शालं याम्यां दिशिमुपश्रितः ३
नैऋत्यां वा श्मशाने वा त्रिकोण ज्ञान्तमालिखेत्
श्मशाने वेशसंछन्ने कंटकैः सर्वतोवृते ४
द्वमरं च कल्पयेत्तत्र कंटकैः कल्पितार्गलम्
अंत्रमालासमायुक्तं याम्यांदिशिमुपाश्रितम् ५
कपोले बहुभिश्चैव परितः परिवेष्टयेत्
अग्न्यागारं त्रिकोणं च कल्पयेत्तत्र साधकः ६
रुधिराक्तेन सूत्रेण परितः परिवेष्टयेत्
श्मशानभस्मनास्नातः कृष्णवासाजितेन्द्रियः ७
रक्तोष्णीषधरो मंत्री रक्तयज्ञोपवीतवान्
संक्रुद्धयभ्रुकुटी वक्रोरक्त चंदन शृलधृक् ८
पुण्यं लोहमयं चापिधारयेच्छूलमुत्तमम्
खदिरं रुधिराक्तं वाधारयेच्चाभिचारवान् ९
अग्न्यागारस्य मध्ये तु प्रतिमांकारयेद्बुधः
शत्रोर्मूत्रपुरीषेण रुधिरेणात्रप्लशुना १०
पाद पाशु समालोटय मृद्भस्मासानकी तथा
वल्मीक संभवां चापि गृहीत्वा शत्रुमालिखेत् ११

खदिरैः कीलकैस्तस्य ऊर्ध्व वेशमधोमुखम्
पाशेन वेष्टयित्वातुशत्रोः प्राणान्निकृंतयेत् १२
कुर्याच्छूलेन भिन्नं तु पादयोर्मूर्ध्नि विद्विषम्
आयससुवमादायसोमं कुर्याद्विचक्षणः १३
अथचेद्दशध प्रोक्तमभिचारविधाविह
कृष्णच्छागोष्टमातंगगशलभानां च शोणितम् १४
विषं च मालिनं तैलं चातुर्वर्षस्य शोणितम्
वामहस्तेस्तुवंकृत्वा दक्षिणाभिमुखः स्थितः १५
त्रिसंध्यं जुहुयात्क्रुद्धः फट्कारेणैव मंत्रवित्
कपालत्रयमःरूढ द्वयोः पादौनिवेशयेत् १६
ऊर्ध्वशुक्लतररूणां च समिद्भिर्जुहुयान्नरः
खदिरैरुधिराक्तैर्वातथानिम्बमयैरपि १७
अन्येन तो यथोक्तेन अव्यक्तं होमयेद्बुद्धः
कुर्यात्प्रकुपितोहोमं यावत्क्रोधो न नश्यति १८
कल्पोक्तमभिचारं तु कुर्यात्सिद्ध्यर्धमात्मनः
सिद्धिस्त्रयो दशविधा अभिचारेणमंत्रिणाम् १९
शत्रोर्देशपरित्यागो व्याधिरर्थ विनाशनम्
उन्मत्ततान्धता चैव तथा चैपांग हीनता २०
वधोन्धोनृपक्रोधो कस्माद्यपि धनक्षयः
प्रयातं या चितं चाषि अरगयं च त्रयोदश २१
आभिर्निर्मलितो दीप्तः प्रोक्षितो विधिनापुनः
तत्वेनाप्यायितश्चैव कथं मंत्रो न सिद्धयति २२
असिद्धौ तु पुरो दंडः स्वमंत्रोत्ताडनं भवेत्
अभिवार्यपरंगच्छन्तरंहन्यात्तथन्तकी २३
ततो निकृन्त प्राणोसौदेहमुत्सृजतिक्षणात्
विधिना द्रव्यघटने क्रोधार्तः शत्रुपीडितः २४

प्रतिलोमेन युंजीतघातके प्राणसंयुतः
तत्त्वणाद्धातयेत्सर्वान्सेन्द्र ब्रह्म पुरस्सरान् २५
आपत्सुयोजयेन्मंत्री यदासंशयितो भवेत्
शरीरामानसाश्चैव उपसर्गास्तु कीर्तिता २६
शारीराव्याधयो ज्ञेयामानसा बहु विस्तराः
स्त्रीकृत्वेवं त्यजैश्चैव बंधुमित्रपुरःसरैः २७
पीडयते मंत्रिणो ह्येते चोपसर्गेस्सुदारुणैः
सिद्ध वाक्यमुपेतस्तु मंत्र होमपुरस्कृतः २८
असंदेहात्तुसिद्धयंति बुद्धयायोगाः सुमंत्रिणः
स्त्रीलोलास्तु न सिद्धयन्ति तथा चार्थ विचिंतका २९
स्त्रीभार्याशूद्रभार्यामांतथान्यासु च संरता
क्रियालोपीचानुरोधीव्यसनीतृष्णयाहतः ३०
अग्राह्यामंत्रिणो ह्येते विधानेह्युपसर्गिणः
आचार्येचातिभक्तश्च तपस्वी च जितेंद्रियः ३१
घातयेत्सर्व रोगांश्च बुध्या ज्ञानं स विस्तरम् ३१
इति श्रीसाम्बपुराणे मारणाभिवोर चतुःषष्टितमेऽध्याये एकादशः पटलम्

पञ्चषष्टितमोऽध्यायः

अथ भेदान् प्रवच्यामि चाङ्गप्रत्यङ्ग योगजान्
उभयस्यार्थविंन्मन्त्री योन्यां बीजेन धारयेत् १
बीजस्यचोद्भवत्वाय व्याधयोन्यान्यधातिनाम्
योनिस्थं बीजयोगेन स्थानस्तम्भविनिर्दिशेत् २
नेत्रयोः श्रवणं पीतं मुखे सिंन्दूर वर्णकम्
बाह्वंसंयोश्च हरितमुदरे कृष्णमेव च ३
गुदशिश्ने विचित्रं तु नीलचित्रं तु जंघयोः

चरणे कुक्कुटं युञ्ज्याद्वलिं माल्यं च सर्वतः ४
स्वस्थाने पूजयेत् तज्ज्ञो विपरीतेन नाशयेत्
न नश्येत यदा व्याधिः स्नेहहारेण योजितः ५
निग्रहस्तस्य वै कार्यः शारेण मंत्रिणा तदा
कीलयित्वा तु वै तं च योनिस्थं वर्णजे दृढम् ६
बिल्वं शिरसि वै पुण्यात्कन्दरं वक्रनेत्रयोः
श्रोत्रे तु यास्य कंकीलं विन्यसेदश्मकुन्तले ७
शाकजं वक्षसि प्रोक्तं बादरं पृष्ठ एव च
उदरे च तथा शिग्रुं चंदनं शिश्न जानुनि ८
सुरदारुमधः काये वैत संचरेण स्मृतम्
प्रतिस्थाने न्यसेत् कीलं सर्वस्थानेषु मंत्रवित् ९
विनाशाय विवक्ताः स्युः श्लेष्मान्तकविभीतकाः
तथा सहचरश्चैव कीला वै सर्वकर्मणि १०
अथवा स्नपयेद्रक्तमावृतिश्चात्र कीलयेत्
ध्यायेत् सुधातकं रोगेर्यदिच्छेद्धातनं परम् ११
अदग्धं भवतार्य्यन्तु यदा ज्ञातिः प्रवर्त्तते
हतो दावेन तेन स्याद्ब्रह्मापि यदि च स्वयम् १२
आकृतिस्तु सदा मासैः क्रियते विघ्नकारिणः
सकलस्तस्य परशुः संक्रमे नायकस्य वै १३
संहारं क्रमशो युंज्यात्तथा मासेन वै बुधः
योनि बीज विभागेन स्थानस्थानेषु सर्वतः १४
सर्वाङ्गगतरोगा हि चिकित्स्याः सर्वतोमुखाः
संक्रामस्तस्य वै यो हि क्रीडा संमंत्रिणः स तु १५
ये ये वै कीलकाः प्रोक्ताः समिधोऽपि हिता यतः
चतुर्माल्योपहारेण तेन तस्य चिकित्सितम् १६
इति श्रीसाम्बपुराणे पञ्चषष्टितमेऽध्याये द्वादशं पटलम् १२

# षट्षष्टितमोऽध्यायः

सामान्यां तु यदा मंत्री चिकित्सां सर्वलौकिकीम्
प्रार्थितो वा मृपन्द्रेण तथा कुर्यादिमं विधिम् १
व्रतं पूर्वं समुद्दिष्टं नायकनान्तु शान्तये
शान्तयेऽद्भुतहोमेन सत्वं वापि विनायकम् २
स्वेन गात्रेण वै नश्येत् साधकः सर्वकर्मणि
तस्माद् व्रतं तु वै कार्यं सर्वोपद्रवशान्तये ३
अन्यथा हीयते मंत्रीः स्वेन गात्रेण योजयेत्
श्वेताम्बरधरो मंत्री श्वेत माल्यानुलेपनः ४
जितेन्द्रियः प्रशान्तात्मा काष्ठमौनी सुमंत्रितः
शुद्ध वर्णा समादाय पत्नीं शुद्ध कुलात्मजाम् ५
दशाहन्तु तया सार्धं ब्रह्मचारी व्रतं चरेत्
दासविभ्रमयोगेन न कुर्यादामनः कृतम् ६
अतीते दशरात्रे तु द्वितीयां क्षत्रियां तनुम्
सर्वपीतोपहारेण शृंगारैः कृतभूषणः ७
सुमना दृढचित्तश्च दशाहं क्षवियापतिः
वैश्यो गुनसमायुक्तः पीतवस्त्रानुलेपनः ८
दृढचित्तश्चरेन् मंत्री दशाहं वैश्यगोचरः
कृष्णवस्त्रोपहारेण कृष्णवर्णान् तु योजयेत् ९
गणिकां सर्ववर्णां वै वञ्चमं सार्ववर्णिकम्
कृत्वा व्रतसमाप्तिं तु योनिचक्रं ततो यजेत् १०
तत्राभिषिच्य चात्मानं हन्याद्रोगांस्त्वशेषतः
यावत्कालं व्रतं युंज्यात्तावत्कालं यजेन्नरः ११
अहस्तु पूजयेद् देवं निशिजातु न पूजयेत्
एतद् व्रतं त्वया प्रोक्तं मंत्रिणां सिद्धिदं परम् १२
सर्वसिद्धिपरो मंत्री व्रतमेतत्समाचरेत्

न पाणिपादचपलो न नेत्रचपलो भवेत् १३
न तु वाक् चपलश्चैव लघ्वाहारो जितेन्द्रियः
साधयेत् प्रयतो नित्यमुपसर्गान् निजोद्धरेत्
हन्तारः सर्वविघ्नानां नरा व्रतपरास्तु ये १४

इति श्रीसाम्बपुराणे ज्ञानोत्तरे षट्षष्टितमेऽध्याये
त्रयोदशं पटलम् १३

सप्तषष्टितमोऽध्यायः

एतद् व्रतं महापुण्यं चरेदुत्तरसाधने
अर्द्धत्वधमे योगे तु पादमेकं तथाधमे १
यदुक्तं साधने तस्मिन् पुराकल्पे महौजसा
बेधयोगान् प्रवक्ष्यामि दिव्य भौमार्थ साधकान् २
सत्वं रजस्तमश्चैव तिस्रु वै मंत्रयोनयः
ब्रह्मा विष्णुस्तथा रुद्रस्ते वै साध्यास्तु मंत्रिणः ३
आर्चायं काम संकल्प्लश्चास्मिन्कार्ये यथा पुनः
नारी दुःख प्रकृत्यां च लिंगौ वा सार्वकायिके ४
चतुर्भुजा भवेत् सा हि तरमाक्रम्य संस्थिता
खट्वांगं दक्षिणे तस्याः कपालं वामके करे ५
चक्रं वरः क्रमाद्धस्ते आर्चास्या द्दिव्य मानुषैः
करादन्तांश्च विन्यस्य तेजोराशि पुटानि षट् ६
क्रमान् मंत्रपदं चैकं शिष्टं तस्यैव संपुटम्
जपित्वा क्रमयोगेन लक्षमंत्रान् सुसंयतः ७
ब्रतं त्वनन्तरं कार्य्यं कामं तत्साधकेन तु
मासं गुग्गुलुहोमः स्याच्छागमांसेन योजितः ८
त्रिसंध्यं ताडनं प्रीत्या होमश्चाथमनन्तरम्
प्रतिसंन्ध्यं सहस्त्रं तु यावन्मासो विनिर्गतः ९

एवं संसाधितो मंत्रः कामदस्तु सदा भवेत्
तंत्रज्ञः साधयेदेवमथवा यन्त्रवित्तमः १०
सुसहायः प्रसन्नात्मा नित्ययुक्तश्च सात्त्विकः
मोहादारभते यस्तु साधनं वेधवर्जितः ११
कृत्या भवति वै सा हि देवताहोनकर्मणि
विपिने काष्ठमौनी स्यादथवा सावकैर्वदेत् १२
समयज्ञैस्ततो विप्रैरन्यथा हीनसाधनः
यादृशः साधको ज्ञेयः सहायस्तस्य तादृशः १३
तत्त्वदृष्टेन योगेन साध्यं मंत्री समारभेत्
तपस्वी च जितात्मा च नित्यभक्तो महेश्वरे १४
एवं विधस्तु वै मंत्री कालेयो मृत्युमाप्नुयात्
अनन्तास्तस्य वै लोका इति मन्त्र व्यवस्थितिः १५
पुण्यात्मा सुकृते स्थाने राजा वा सार्वभौमिकः
विद्या सिद्धा भवन्त्येते साधकास्तु महीतले १६

इति श्रीसाम्बपुराणे ज्ञानोत्तरे सप्तषष्टितमेऽध्याये
चतुर्दशं पटलम् १४

अष्टषष्टितमोऽध्यायः

साधनं संप्रवक्ष्यामि यथा सिद्ध्यन्ति साधकाः
वेधयोगांश्च विमलान् नानासिद्धिफलप्रदान् १
षाण्मासिकं तु वै योज्यं पुरश्चरणमादिशेत्
शाकादिना विधानेन जलैर्वापि च शोधनम् २
ध्यायेच्च प्रणवं पश्चात् सहस्रं शतषड्गुणम्
आयच्छन्न तु संभ्रांतः पूर्वेणा पूर्णचेतसा ३
शुद्धकायस्ततो मंत्री कृत्वा वासगृहं ततः
तस्मिन् संस्थापयेद् देवं विधिना शास्त्रवोदितम् ४

विद्याङ्गानित्वरिष्टानि स्वमंत्रं विधिना क्रमात्
सहस्रदशपर्यायमेवैकं परिवर्त्तयेत् ५
ततो मंत्रं समाधाय ईप्सितं मनसः शुभम्
आप्यायितुं विरक्तं च दीपितै शास्त्रतः क्रमात् ६
जपान्ते तु व्रतं योज्यं ब्रतान्तेऽपि च साधनम्
अतस्तान् मराडले योगः साध्यमंत्रस्य साधने ७
प्रोक्ताः क्रमेण विधयः सर्वमंत्रानुसारिणः
असिद्धमेध्यमायोज्यं कृते वा व्यंजनादिके ८
तंत्रोक्तं वेध्यात्स्वमंत्रमकारमेव च
साधयेदथतंत्रज्ञै यज्ञस्य नवसः क्रियात् ९
होमान्ते ह्यग्निकुराडायां चोदितो विधिनोत्थितः
नरो न सिद्धमान् यःस्यान् मंत्ररूपी स दृश्यते १०
चलत्यपि तथा मंत्रं मन्यन्ते परिचारिकाः
उद्यताश्च महाघोरा लन्दयन्ते मंत्रिणः परे ११
लत्तयेद्यदिरूपेण शास्त्रस्योक्तस्थलत्तितम्
सिद्धमंत्रं विजानीयादन्यथा तु विनाशकः १२
उत्थाय यदि मंत्रेण स्वेनार्थः संप्रदृश्यते
साध्यः स एव विज्ञेयोऽन्यथा घातयेत्सुतम् १३
यातालदिशिवान्तस्तु क्रमतस्तत्र साधकः
विद्यासिद्धो तु वै मंत्री कामाद्वै घोरकप्रदम् १४
सिद्धो यः स श्रिया राजा सप्तदीपाधिपो बली
भुक्त्वा तु पार्थिवान् भोगान् नूनं याति तनुत्तये १५
एतास्तु सिद्धयः प्रोक्ता उत्तमाः सर्वकामदाः
तदर्द्धा मध्यमा ज्ञेयाः कनीयस्योर्द्धतोप्यतः १६
स सकामयतिः सिद्धो ह्यन्यस्मिन्सिद्धिमिच्छति
सहायैर्गुग्गुलुयोगैः सिद्धो ध्यानीत्ततोऽयथा १७

भ्रष्टराज्यो नरो देवो यदि स्यात्सिद्धिशोधने
असिद्धे तु गुणो योगे जपादे ब्रतिनो नराः १८
सुखं क्रमन्ति वै सिद्धिं संतृप्ता मंत्रदीपिताः
हीनो यो हि नरो योज्वः किं पुनः साधकेच्छया १९
मासं गुग्गुलुहोमस्तु सर्वदा सर्व कर्मसु
जपवृद्धिः सदा योज्या संक्रमे मंत्रिणा सदा २०
संकल्पक्रमणं युज्यान्नासंकल्पस्तु सिद्धयति
संकल्पं तु ततः कृत्वा साध्यं मंत्री तु साधयेत् २१
जितेन्द्रियः सत्यवादी दृढचर्यारतः शुचिः
मितभुग्मितभानश्च साधयेत्सिद्धमुत्तमाम् २२
न संभाषेत् वै शूद्रं प्रमादान् मंत्रसाधकः
अरक्तो रंजयेल्लोकान् कामी चेत्स्यादकामुकः २३
गूढविद्याब्रतश्चापि प्रमादी स्यात् स साधकः
क्रियां च सुदृढां कुर्यान्नविधि चेत्स साधकः २४
यावद्व्रतं तु यः कुर्यात् तस्य सिद्धयन्ति लौकिकाः
जपित्वा सहितां मासं ततः साध्यं प्रयोजयेत् २५
प्रसूति घातकं कृत्वा लवणस्याहुतिं क्रमात्
सप्तरात्रं तथा हुत्वा वशे जतून् करोति सः २६
प्रतिलौमैस्तथा वर्णैः साधको घातकस्य तु
शृङ्गबेरविषे हुत्वा धातयेत् सर्वजन्तुकान् २७
अव्रती नैव संसिद्धेदजयः साधकः स वै
मोहादारभते यस्तु हन्यते स विधानवित् २८
वेधकामस्तु मंत्रस्तु यदि रूपं समालिखेत्
पूर्वोक्तेन विधानेन त्रिमुखांतां चतुर्भुजाम् २९
अष्टशक्तिपरो चैव दिक्पतीनां च रूपकैः
रश्मयस्तु यथार्कस्य तथा मंत्रस्य ताः स्मृताः ३०

यथा विष्णुस्तया रुद्रो बीरभद्रश्च पार्श्वतः
एते मंत्रस्य वै योज्याः सर्वकालं च मंत्रवित्  ३१
होमकाले तु मंत्रस्य जपेन विनियोजयेत्
शान्तने चापि रोगाणामेष दृष्टो विधिः परः  ३२
संशयी तु यदा स स्यात्तदाकुर्यादिममंविधिम्
साधयेत् कामतोऽह्यर्थान् पतिः स्याद् बीजसत्तमः  ३३
राष्ट्रभंगनिपातेवा स्थानत्यागे तथा बुधः
संपुटे स्थानयेन्मंत्रं यावत्कालविपर्ययः  ३४
संहारान्तं ततः कृत्वा मध्ये मंत्रं तु योजयेत्
पुनः संहारमायोज्य मध्ये बीजेन वेष्टयेत्  ३५
दशवर्णेन बीजेन स्वङ्गप्रत्यंगयोजनम्
न्यस्तो भवति वै मंत्रः कालमाकल्पनं नृणाम्  ३६
अधस्तात् प्रनवं कृत्वा प्लुतो भवति पादयोः
पुनः पुनस्तथा हस्ते व्योकारश्चापि वामके  ३७
हृदये तु मकारः स्याद् व्योकारो जठरे स्थितः
पिकारः पृष्ठसंस्थो वै नकारो मुख संस्थितः  ३८
प्रणवं स्थापयेन्मूर्ध्नि स च दृष्टो विधिः परः
न्यस्तो भवति वै मंत्रो यावत्कालं तु साधनम्  ३९
विधिरेष तु मंत्राणां सूक्ष्मो वै सर्वतोमुखः
असंदेहेन सिद्धेन विधिगुप्तेन मंत्रवित्  ४०
ग्रहणे चापि मंत्रस्य भिन्न कार्याश्च मंत्रिणः
मूलन्तु साधनं युज्यादाद्यन्तकविधिः क्रमात्  ४१
क्रमाद्धा नैव कुर्वन्तिकृतिमित्यत्र साधनम्
आमंत्रयतु विवर्त्तेतु तंत्र युक्तं तु साधयेत्  ४२
मंत्रे जपे च ये लग्नास्तथा व्रतविधौ स्थिताः
साधनं तु पुनस्तेषां यथाशास्त्रसमागमम्  ४३

स्वल्पेऽपि साधने युंज्याज्ञपव्रतरतैस्तु वै
अन्यथा हीयते मंत्री कर्म वापि निरर्थकम्  ४४
मासं साधनयोगेन जपित्वा चापि संहिताम्
पंचरात्रव्रतं पश्चादसिधारं यथाक्रमम्  ४५
क्षुद्रान्तो गान गृहांश्चापि तथा व्याधीनुपद्रवान्
इच्छातः साधयेत् सर्वास्तीक्ष्णव्रतरतो नरः  ४६
महातपस्वी च जितेंद्रियश्च नचान्यभक्तश्च महेश्वरादसौ
विद्यासुतत्वेषु महास्थितिश्च प्राप्नोति विद्याधरां च लक्ष्मीम्  ४७
दशात्मक तु तं बुद्ध्वा वीजतत्वन्तु कृत्स्नतः
नियोगं पदबीजानां बुद्धिसिद्धिं यथोदिताम्  ४८
सर्वमंत्रात्मका देवाः सर्वदेवाः शिवात्मकाः
शिवतंत्र पदैर्बीजैः काल काल कृपादिभिः
बुद्ध्या सम्यग्यथान्यायं सिद्धिं चाशु प्रवर्तते  ४९
इति श्रीसाम्बपुराणे ज्ञानोत्तरे अष्टषष्टितमेऽध्याये सर्वसामान्यसाधनं नाम पञ्चदशं पटलम्  १५

एकोनसप्ततितमोऽध्यायः

तत्वानुसारेण पथः क्रमशोथानुवर्ण्यते
शिवलोकं यथा येन प्रविशेद् गृहवद्गृही  १
गणमंहुलतत्वज्ञस्तेषु पापरतः सदा
अनेकशोऽभिषिक्तश्च शिववद्गुरुपूजकः  २
अपितु शिवयोनौ च गर्भ श्चांबिकयाधृतः
योगेन जनितश्चैव योगात्मा योगसंभवः  ३
जातकर्मगुणैर्युक्तः स्नानादिगतकल्मषः
कृतरक्षश्च धूपेन सत्यात्मा सत्यसंभवः  ४
प्रसृतस्तिवृत्तान्तं च मूर्ध्याघ्रातः शिवात्मना

कर्तृवत् कृतचूडोऽयं मंत्रशक्तितनुस्थितः ५
विधिना चोपनीतस्तु मुंजाजिनधरः शुचिः
देवव्रतधरो मुंडी जटी वा भैक्ष्यभोजनः ६
विधिनाऽधीतविद्यश्च सर्वज्ञो बीजवित्तमः
कृतात्मा कृतविद्यश्च कृतगोदानदक्षिणः ७
पाकयज्ञो हविर्यज्ञो सोमयाजी तथैव च
शिवमार्गानुसारी च धनवान् योगनिश्चयः ८
यथोक्तज्ञानकर्मस्थो गुणदोषविवर्जितः
नास्ति निर्माल्य दोषश्च सर्वतत्वेषु सिद्ध्यति ९
एवं गुण विशिष्टात्मा तपस्वी द्वन्द्ववर्जितः
क्रोधादिभिर्वियुक्तश्च समलोष्ठाश्मकांचनः १०
आत्मवत् सर्वभूतेषु सर्वमात्मनि पश्यति
प्राणायामादिभिः खिन्नस्तुत्त्या च पुट संशयः ११
विशुद्धाचार आचार्यो भावतः प्रणियुज्यते
अनेन क्रमयोगेन विशेद्देवं परं प्रभुम् १२
प्रतिकर्तृप्रतिध्यायी विधिना तत्तदात्मनः
ध्यायंश्च शिवमात्मस्थमाचार्य्यं चापि शेषयेत् १३
प्रवक्ष्यति प्रयुक्तश्च दीक्षया विमलीकृतः
ध्यानयुक्तः सदा गच्छेद्ध्यायिनं परमं पदम् १४
चरेदुत्पन्न विज्ञानो मुक्तिव्रतमनिन्दितम्
भूतव्रतादिसिद्ध्यर्थमेकान्ते सर्वतः क्षमी १५
संत्यज्य सर्वकालात्मप्रधानहितवादिनम्
मतानि विपरीतानि ध्यायेन्नित्यं सदाशिवम् १६
निनिभित्तं निराकारं वाग्विशुद्धं परात्परम्
प्रमाणं विषयारीतमदृष्टन्तादि लक्षणम् १७
ज्योतिषां च परं धाम ज्ञानानां परमं पदम्

तत्वानां परमं तत्वं गतीनां परमां गतिम् १८
तत्वेन तन्तुतत्तत्वं तन्तुता चैव सत्ततम्
तेनैवतन्तुना नित्यं चिंतयेत्तत्सुनिष्कलम् १९
न्नुनिकाध्येय योगज्ञो बिंदुनाद तनुस्थितम्
मुञ्चति न्निप्रमात्मानं बुध्वा ज्ञानमयं परम् २०
सतस्यास योगेन कालेन बहुधा नरः
विधिना भावशुद्धेन देही विन्दति सत्पदम् २१
मुहूर्त्तार्द्धार्द्धमात्रेण मंत्रबीजकलादिभिः
दिवार्द्धरविभागेन देही विन्दति तत्न्नणात् २२
प्राकृतानि च तत्वानि प्रकृत्या प्रकृतानि वै
तीव्रं तत्वं परं सून्मं मंत्रात्मा पञ्चविंशकम् २३
तीव्रस्यात्मनि तत्वज्ञो योगवान् योगपंडितः
अचिराल्लभते शांतिं देही तत्वेन यो हितः २४
धारणात्सततं योगो जपध्यानादिदीपितः
योजयंस्तु परं योज्यं लिलिहेत्यत्रमव्ययम् २५
एवं गुणविशिष्टस्तु योजयेत्तत्वमंडलम्
अगुणस्त्वेव योज्यः स्यान्मंत्री विद्येश्वरादृते २६
इति श्रीसाम्बपुराणे एकोनसप्ततितमोऽध्यायः ६९

सप्ततितमोऽध्यायः
उक्तो जपो विधिर्विश्वो बीजं च सह कर्मभिः
सहयोज्यं यथा बीजमिच्छते परमेश्वरः १
वक्तुमर्हास्य शेषेण भक्ताय सततं प्रभो
एवमुक्तः प्रभुर्देवः प्राह तस्मै यथा विधि २
अन्नराणि दशत्रिंशद्योनिरुक्ता मया पुरा
सर्वं वै चोच्यते तस्माद्यथाबीजं प्रसूयते ३

त्रीणि चत्वारि च द्वे च त्रीणि पंचचतुष्टयम्
त्रीणि चत्वारि द्वे त्रीणि पंच चैव चतुश्चतुः ४
तद्द्विकेन समायुक्तो य निरेषा हि विश्वभुक्
संपृक्तैषा प्रसूयेत अक्षरेण दशात्कम् ५
व्यंजनानि स्वरश्चैव परमेष्ठ्यादयस्तथा
भूताधिपतयश्चैव तेभ्यो ज्योतिः परं ततः ६
इति श्रीशाम्बपुराणे बीजप्रसवे सप्ततितमोऽध्यायः ७०

एक सप्ततितमोऽध्यायः

कृष्णचक्रसमा कालमाग्नीष्टकमायुतम्
बीजानां परमं बीजं शंकरं परमेश्वरम् १
भिन्नं चमार्गमूलेषु विन्यस्तं च सबिंदुकम्
शरीरं देवदेवस्य अक्षरं बीजनिःस्परम् २
घृतं परं सयाभवत्याप्रणवाद्यञ्च संहतम्
भिन्नं चतुर्भिर्वर्णैश्च सदृशश्चात्मनस्तथा ३
आकाराद्यं त्रिकं पूर्वे सुकारात्पूर्वदक्षिणे
सम्यग्विज्ञायमेधावी स्थापयेच्चतुरक्षं ४
पश्चिमे तु तकाराद्यं पदयोन्यां तु तत्ववित्
हृदक्षरं पदविन्मंत्री विन्यसेद भूतये शुभम् ५
चकाराघन्तरे मार्गे पदमक्षर संज्ञितम्
आत्मप्रसूतिं प्राणांश्च विन्यसेत्तत्वविद् भुवि ६
पकारादि यकरान्ता पंचिका शक्तिसंज्ञिता
शिवधात्रीस्थिता मध्यं व्याप्य विश्व जगत्पतिम् ७
विशिष्टानि ततोन्यस्य बिन्दुना भूपतिः क्रमात्
द्वे द्वे यथा पतत्वं वै चेशान्यां दिशि दक्षिणे ८
अकारेकारभूताद्या रेफाद्याश्च ततः परम्

एकाराद्येतथा द्वे च शन्तर्षोत्तरव्रिम्मकाः ९
इति श्रीसाम्बपुराणे बीजप्रसवे एकसप्ततितमोऽध्यायः ७१

## द्विसप्ततितमोऽध्यायः

वर्णनाशविधिस्तुत्या व्यंजनानि यथाक्रमम्
सिद्धये सर्वरूपाणां प्रथमः पूर्वदक्षिणे १
द्वितीये नैर्ऋते स्थाप्य तृतीयो वायुदैवते
चतुर्थः सर्वदैवत्ये विन्यासं शृणवतः परम् २
अन्तस्थाः प्रथमं च स्याद्विन्यस्य दक्षिणे तथा
शेषास्तथा शकाराद्या विन्यस्य पश्चिमा दिशम् ३
उत्तरस्यां च संन्यस्याश्चत्वारो मुखनासिकाः
परतश्च सुरास्तेभ्यो बहिः स्थानं यथाक्रमम् ४
पूर्वेण तु समान्यस्य ह्रस्वदीर्घप्लुतास्त्रयः
उत्तरेण त्रयस्त्वन्ये देवं द्वादशैव तु ५
ऐकारो नैऋते स्थाप्य उत्तरे वायुदैवते
चक्रमे तद्द्विशक्तिस्थं बीजं वै शब्दतां वरम् ६
इति श्रीसाम्बपुराणे ज्ञानोत्तरे द्विसप्ततितमोऽध्यायः ७२

## त्रिसप्ततितमोऽध्यायः

आद्यन्तं प्रणवं ज्ञेयं योनिबीजं पुनः पुनः
न्यसेत् पंचाक्षरम् भूसय् फलार्लो परमेष्ठिनम् १
न्यसेदष्टाक्षरं तस्य बीजमादौ स बिन्दुकम्
शेषाः स्युः प्रणवाद्यन्ताः एरस्यां दिशि कारणम् २
दक्षिणस्यां परो देवः परस्यां स्यात् स बिन्दुकः
इशान्यादौ स बिन्दुः स्यात्तदन्यानि तु पूर्ववत् ३
न चाक्षरः परस्यां स्यात् सबिन्दूकारपूर्वकः

अष्टौ क्रियायदन्यानि भूतात्मा नामतस्तु सः ४
व्योमाद्यन्तं परो देवो विरामे प्रणवस्ततः
अक्षर्णिस् च विज्ञेया बीजयोनिस्तु यादृशी ५
सुप्रणवादि च भवेद् व्यापिने मध्यतो भवेत्
प्रसूत्याख्यो यदा देवः वर्णा दश च सप्त च ६
ओंकारावमितो यस्य व्योममध्ये ततः परः
विन्यस्य सृष्टिसंज्ञोऽयं देवः पञ्चदशाक्षरः ७
एषामादिपदैर्न्यस्य देवः सदसदात्मकः
एगान्यां दशको धाता सृष्टिसंहारसंज्ञितः ८

इति श्रीसाम्बपुराणे बीजप्रसवे त्रिसप्ततितमोऽध्यायः ७३

## चतुःसप्ततितमोऽध्यायः

उत्तरा योनयस्तेषां मंत्रास्ताभ्यो विनिःसृताः
अष्टाक्षरा तु भूत्यन्ते व्योमादि प्रथमा हि सा १
शिवयोनिः
ॐकारादि हकारान्ता अक्षराः परमाः पराः
मुक्तये विहिता पुण्या योनिः शब्दवताँ मता २
परयोनिः
दिशि कारणयोनिः स्याद् द्वंद्व वाहो ह्यनन्तरम्
सविंद्वाकारपूर्वा सा भूत्यन्ताश्चतुरक्षराः ३
कारणयोनिः
क्रियाशक्तिस्तथान्यस्य पंचवर्णेयमात्मनः
इकारादिस्तकारान्ता भूतये त्रिगुणस्य तु ४
क्रियायोनिः
वारुणाभ्यां भूतयोनिः स्यादुकारादिषडक्षराम्
भकारान्ता च सा ज्ञेया भुवनस्य वनस्य तु ५

भूत्योनिः
सप्ताक्षरपरा चास्याः भूतयोनेरनन्तरम्
व्योमादिवायुदेवान्ता वायव्या बीजयोनिका ६
बीजयोनिः
वकारादिमकारान्ता मध्ये व्योमसमीरणात्
सृष्टियोनिः परा द्वे च दश चैकाक्षराणि तु ७
सृष्टियोनिः
संहारो द्वादशास्यां ते प्रणवाद्यन्त दीपितः
सर्वस्य वाङ्मयस्यैष संहर्त्ता केवलः प्रभुः ८
संहारयोनिः
क्षणपूर्णावथोंकारौ द्वारपालौ तु बाह्यतः
कुंभाकृतिरुदग्द्वारं घृतं भूतैश्च सर्वतः ९
योनयः पार्थिवान्यस्यास्तंत्रस्य त्रयमादितः
पृथ्वी यः पूरयेत सप्त विभक्तेः प्रणवाष्टकः १०
पार्थिवयोनिः
अक्षराणां च योनिः स्यादादिवर्णा यथाक्रमात्
सर्वत्र बोजनं कार्यं बीजिनां प्रणवे नहि ११
अपां योनिः
योनिस्तु तेजसोंभः स्याद् भूतये सर्वदेहिनाम्
कादयस्त्वग्निवर्णानां प्रभवाय महात्मनाम् १२
योनिराग्नेयी
आकाशादिः गुणाकाराः शब्दाश्च बीजयोनयः
सृष्टये शब्दरूपाणां कालादिखताविधिः १३
आकाशात्मिकायोनिः
भूतानां परमां योनिःभकारादितथा परा
वाङ्मयस्य च सिद्धयर्थं भूतयोनिं विधापयेत् १४

भूतसंहारयोनिः
द्वादशे ते तु विन्यस्य चत्वारो यमसंज्ञकाः
विषमं परमं देवं य एवं ध्येयमीश्वरम्  १५
नपुंसकयोनिः
विश्वयोनिरतो न्यस्य सर्वज्ञा विश्वसृक्पराः
द्वारपालनमस्कार वर्णा उक्ता ससंज्ञिता १६
नमो नमो भवेन् मध्ये त्तत्वस्य प्रणवस्य तु
एवं दीपितमेतत्तु विश्वसृग्भूतये मतम्  १७
विश्वयोनिः
परमं कारणं चैव क्रियाभूतात्मना सह
बीजयोनिश्च सृष्टिश्च संहारश्चाष्टमः पुनः  १८
विधानं देव देवस्य मनसाप्यथ कीर्त्तयेत्
प्रविशेत् परमं देवं विमुक्तः सर्वबन्धनैः  १९
एवमेव सदा देवः कृत्स्नस्य जगतो गुरुः
पूज्यो ध्येयस्तथेज्यश्च विद्वद्भिः पर्मार्थकः  २०
इति श्रीसाम्बपुराणे बीजप्रसवो नाम चतुःसप्ततितमोऽध्यायः  ७४

पञ्चसप्ततितमोऽध्यायः

उक्तं तदोनिबीजं च सांकुरं प्रसवं महत्
तत्पुष्पफलदं मह्यम् मुक्तिदं सर्वदेहिनाम्  १
पूर्वस्यां संशयश्चैवं दीप्तायामुच्यतां पुनः
तं विधिं संशयदेवं भक्तःस्यामहभास्करेः  २
श्रुत्वा विज्ञापनं तस्मै प्रोवाच विधिवत् प्रभुः
समयादि यथातत्वं दीक्षां सम्यक्चतुर्विधाम्  ३
परीक्षिताय भक्ताय सुश्रूषणरताय च
तपस्विने विनीताय क्रोधादिरहिताय च  ४
पूजयित्वाथ देवेशं प्रागुक्तेन विधानतः

आवाह्येत्ततस्तस्मिन् भूतयोनिदंशात्मिकाम्  ५
दृष्ट्वा च सर्वभूतैश्च श्मशाने सकलीकृतम्
सप्तकृत्वोऽथ संपात्य दर्भपुंजे स्थितस्ततः  ६
अन्यत्र स्थापितं शिष्यमाज्यादौश्च सुपूजितम्
पावयेत्तंत्रिरूर्ध्वं वै नार्यैः पिंजूलकैरधः  ७
आहुतीर्जुहुयाद्भूतैः सर्वैरेव यथाक्रमम्
संपातान् पातयेच्छिष्ये मुक्तदोषस्तथा भवेत्  ८
सकलोकृत्य पश्चाच्च यजेच्चापि पुनः शुचिः
संस्थाप्य दक्षिणेचग्नौर्भुतिर्हुत्वाचकिल्विषम्  ९
भस्य मुष्टिः ततस्तस्मिन् दद्यादादाय पावकम्
एवं संमयिनस्तस्य भवेत् संस्कारयोग्यता  १०
इति श्रीसाम्बपुराणे ज्ञानोत्तरे बीजप्रसवे पञ्चसप्ततितमोऽध्यायः  ७५

षट्सप्ततितमोऽध्यायः

योग्यतामप्यबुद्धस्य संस्कारं गुरुरारभेत्
भूतस्य पावनेरेव तस्य संपूज्य तत्वतः  १
संहारशक्तिमावाह्य विधानेन दशात्मना
आत्मानं सकलीकृत्य शिष्ये न्यासान् प्रयोजयेत्  २
कृत्वा पूजादिकां सम्यक् प्रतिमंत्रं प्रयोजयेत्
सृष्टंतु पावकं कर्मयद्यसौ प्रतिपद्यते  ३
ब्रह्मघ्नं शोधयेद् गोष्ठं दशाहं पापशुद्धये
अन्येष्वप्सु त्रिरात्रश्च नहासर्गेषु तत्ववित्  ४
प्रत्येकमाहुतीस्तिस्रो हुत्वा संपातकारणम्
संस्थितो दक्षिणेनाग्नेः क्रमेण लभते गुरुः  ५
गरुणाष्टशतं हुत्वा संपात्यास्त्वेकविंशतिः
संपातो मूर्ध्नि शिष्यस्य शिवयोन्यां तथाञ्जलिम्  ६

पुष्पस्य मूर्ध्नि दद्याच्च क्रियायोन्यांच निःक्षिपेत्
दर्भे दशात्मना होमस्त्रिकमेतन् मयोदितम् ७
तथा पुँसवनं कृत्वा क्रियायोन्यैश्च मंत्रिणः
तथैव तण्डुलैर्जुहुयादाहुतिं त्वेकविंशतिम् ८
जातकर्म तथैव स्यात्तोयं मूर्ध्नि दशात्मना
तथाव्याहृतिहोमश्च पानं चास्य मलापहम् ९
हिरण्यगर्भस्योक्तायाः क्रियायोन्यसितं परम्
हुत्वा प्रशमयेच्चैव मधुना च समायुतम् १०
ये चापि शिष्ट संस्काराः प्राशनाद्या व्रतान्तकाः
कृष्णाजिनादिर्लिंगानि दद्यादस्य दशात्मना ११
होमं कारणयोन्यां च कुर्यान्नित्यं समाहितः
सप्त सप्त तथा हानिं चरेत् सप्त व्रतानि वै १२
संपातनयनां चाद्यांत्तथा वै कारणस्य तु
कर्मविवाहार्हैं चैव वररूपाय यज्ञवान् १३
यागवांश्च हविर्यज्ञे सोमपानं यथोच्यते १४
सोममौदुंबरे न्यस्तंनमस्येतदशात्मना
दशसंपातितं पीत्वा ऋतुभिर्युज्यते तरा १५
दक्षिणां तद्विदे दद्याद् देवायेनं निवेदयेत्
गुरुं प्रदक्षिणीकृत्य लब्धानुज्ञो यथा विधिः १६
एवं तु संस्कृतो योग्यः सिद्धीनां सर्वतस्ततः
मृतश्चमोक्षमाप्नोति विहरेत् च परमं पदम् १७
इति श्रीसाम्बपुराणे ज्ञानोत्तरे बीजप्रसवे षट्सप्ततितमोऽध्यायः ३७

## सप्तसप्ततितमोऽध्यायः

शिवतुल्यत्वमस्य स्यात् पाशच्छेदस्तु येन वै
तमतो वर्णयिष्यामि संस्कारं क्रमशः परम् १

संस्कृत्य पूर्व बद्धारो दृष्ट्वा दैवं यथा विधि
आलिखेन् मराडलं सम्यग् भूतानां विधिवत्ततः २
तस्मिन्निवेश्य भूतानां संपूज्यैनं यथाविधि
भूताधिपेन तत्वज्ञो मन्त्रपूतजलैस्तु तत् ३
द्रव्यैस्तु संगलैश्चैवमभिषिच्य सुपूजितः
अलंकृतं गृहीत्वाथ देवायैनं निवेदयेत् ४
प्रदक्षिणामतः कृत्वा विज्ञाप्यो विधिवत् प्रभुः
प्रणम्य विधिवद्धीरः प्रसीदैतिह्यमु वदेत् ५
पप्रच्छ शिताम्यस्यादुक्तश्चापि यथासुखम्
पाशेभ्यो मोक्षयेच्चैनं गुरुत्वं वै प्रसादजम् ६
अथास्य दक्षिणेनाग्नौ सूर्य्ययोन्यां विधानतः
दत्वा दर्भासनं तत्र उपविश्य सुयंत्रितम् ७
यथोक्तं पुरुषं देवं सन्निवेश्य प्रपूज्य च
विज्ञापयेच्च तस्यार्थं यथानुग्रहवान् भवेत् ८
आग्नेय्यां दिशि च प्राच्यां पुरुषं संनिवेश्य च
आपदं संस्थितैर्मंत्रैर्जुहुयात्तु शिरः पुमान् ९
अभिमंत्र्य च तं शिष्यं जुहुयाच्च शतं शतम्
स्वेन स्वेन तु मंत्रेण सृष्ट्वा येन यथाविधि १०
अक्षयेन तु दैवेन सर्वेषामनु मंत्रिणाम्
जानुतो भूतयोनिः स्याद्गनात्मा धातुना समम् ११
लिंगे प्रसवयोनिश्च प्रतिबीजस्तु विनिःसृता
नाभौ च भावयोनिस्याद्विजयस्य दशात्मकम् १२
हृदये परमा योनिर्जाता सा परमेष्ठिनः
कारणाख्या क्रियायोनि ब्राह्मी चैषा च बीजयेत् १३
संहार चक्षुरुर्ध्वस्यादष्टबीजं प्रकीर्तितम्
सर्वांश्च जुहुयाद्ध्यायन् साधके चात्र विन्यसेत् १४

अङ्गुष्ठेन स पुष्पेण न्यासः सर्वत्र शस्यते
प्रतिमानं च भवस्याद्देयं पात्राधिवासितम्  १५
विश्वसृक्तर्पणं कुर्यात् साधकस्य च संपुटम्
निवारस्तेन विघ्नानामन्यत्रापि प्रयुज्यते  १६
देवस्याथ सकाशे तु श्राव्यं तस्यानुशासनम्
अनुग्राह्यास्त्वयाशिष्या यथा शास्त्रमनिन्दिताः  १७
संयुज्य देववच्चापि गुरुं तद्वत्स गोचरम्
सर्वं प्रदक्षिणी कृत्य ततो देवं विसर्जयेत्  १८
इति श्रीसाम्बपुराणे विसर्जन विधिनमि सप्तसप्ततितमोऽध्यायः  ७७

## अष्टसप्ततितमोऽध्यायः

संन्यासस्य त्वहं मार्गं सवंन्दये तत्वतः परम्
समयाद्यम् च पाशान्तं कृत्वा तु सार्णवाहृते  १
न च पूजा प्रयोक्तव्या हुत्वा होमं यथाविधि
हृदये हृदये न्यस्य होमभस्मादि निर्मितम्  २
स्वयोनौ पातयेत्वेवं ब्रह्मसूत्र सकर्मकम्
जुहुयाद्विश्वसृग्वाग्नौ वाचयेदगृहागतम्  ३
स्वयोनौ यातयेत्वेवं ब्रह्मसूत्रं सकर्मकम्
जुहुयाद्विश्वमृग्जाग्नौ वाचयेदगृहागतम्  ४
अग्निं प्रदक्षिणीकृत्य भुवनान्यस्य चात्मनि
पिबेद् भस्मोदकं पुण्यं बीजेनैवाक्षरेण सः  ४
संन्यस्तमिति चैव पांत्र चरेच्च व्रतानि च
प्रदक्षिणमतः कृत्वा देवमाग्निं गुरुं तथा  ५
सशिखं वपनं कृत्वा त्यजेत सर्वमतः परम्
सुखदुःखे समे कृत्वा देवाल्लोकाच्च सर्वतः  ६
पूतोदकेन कार्यं वै पाणिपादं चरेच्छनैः

वर्षासु शून्यमागारं मूलं घृतस्य नाश्रयेत् ७
मौनी स्यात्तु त्यजेत् देहं ध्यायेच्च हृदयाधिपम्
देवं दृष्ट्वा गुरुं चापि मनसा पूजयेच्च सः ८
सखल्वावर्तयत्येवं शिवं शुद्ध्यत्यसंशयम्
पुनरावर्त्तिनो न स्युः सर्वतंत्राधिकारिणः ९
इति श्रीसाम्बपुराणे ज्ञानोत्तरे अष्ठसप्ततितमोऽध्यायः ७८

## एकोनाशीतितमोऽध्यायः

यदा निर्वेदमापन्नो यश्चेच्छापदमन्वगः
दस्युभिर्निहिते राष्ट्रे शत्रुणा वा वलीयसा १
प्रार्थितेऽपि नयेनाथ बलानां संभवादपि
जीर्णो विगतचेष्टो वा सन्नयासाद्विनिवर्त्तयेत् २
अथागत्वाशुभं गोष्ठं संहारं च त्र्यहं जपेत्
ततः संभाष्य योग्यः स्यान् नमस्कारादिपूजनैः ३
यतः स्नातः शुचिर्भूत्वा देवदेवं प्रणम्य च
विज्ञापयेत् क्षमस्वेति रक्षां मम निवर्तय ४
बीजयोन्यां समावाह्य पृथिवीं संन्यसेदतः
न्यसेच्च वरुणं मूर्ध्नि यजेदेवं दशात्मना ५
संहारशक्तिमावाह्य चात्मन्यासं प्रयोजयेत्
सकलीकृत्य भूतैश्च तथैतान् जुहुयात्ततः ६
शेषं तु शतमाभाषिरधिकं तु पिबेत्ततः
ततः प्रकृतिमापन्नो दीक्षां शक्तिमवाप्नुयात् ७
पार्थिवः सकलीरग्नौ मंत्रो हेमयशतं घृतम्
वारुणेन ततो हुत्वा शेषं पानं यथापुरा ८
बीजयोम्यां ततः स्तुत्वा पूजां कृत्वा प्रणम्य च
अनुग्राह्योऽस्मि देवेश कामं सर्वसमृद्धये ९

पूर्वपत्तं त्तपा उक्ता नित्यं स्यात् समया यथा
अनेन विधिना न्यासान्निवर्तनमनन्यथा १०
इति श्रीसाम्बपुराणे ज्ञानोत्तरे एकोनाशीतितमोऽध्यायः ७९

अशीतितमोऽध्यायः

अप्यवा संशयापन्नं सद्योमुक्तिं समाचरेत्
देवं संपूज्य सम्यक्च दत्तिणामूर्तिमाश्रितः १
अप्यतद्दर्शनाद्धीरः स्थिरचित्तो दृढव्रतः
स्वहृदि पुरुषं न्यस्य यथापूर्वं विधानतः २
आचान्तः पुगराचम्य युञ्जन् मन्त्रान् यथाक्रमम्
वायव्याग्निं निवेश्याथ ह्यात्मानं तत्र योजयेत् ३
ततः संहारदेवेन सृष्टिमाग्नेर्नियोजयेत्
विशेच्च दीशमापन्नो योनिं भूतेशसंज्ञिताम् ४
पापं दहति योनिः स संहारेण प्रचोदितः
तत्त्वबीजस्य कात्स्थानात्त्निप्रं विगतकल्मषः ५
दग्ध्वा भूतेशयोनिं स शिवयोनिं क्रमाद्विशेत्
ततस्तु चैकसंयुक्तौ वायुना चाचलीकृतौ ६
शिवाग्नी चेसतुश्चैव सर्वभूतत्तयंकरौ
तर्तास्मन्समीभूते हृदि प्रोक्ते ततोऽनले ७
दहेच्छरीरं सोष्माणि मंत्राणि परमेष्ठिनः
असंभारस्ततो मंत्री दह्यमानेन चेद् धृदि ८
नात्मना विशयेदस्त्रं विसर्गास्त्रंमकारजम्
द्वाराणां शीर्षरापानां विधाना च व्युपस्थितः ९
रुद्धमार्गास्ततो वह्निं विदुषा ऋतुशतालुभित्
भित्वा मूर्ध्नि कपालं तु विशता व्ययमीश्वरम्
यं प्राप्य न निवर्तेत योगिनः परमं शिवम् १०

इति श्रीसाम्बपुराणे ज्ञानोत्तरे अशीतितमोऽध्यायः ८०

## एकाशीतितमोऽध्यायः

एतेषां परवान् योगः संवत्सरतनुं स्थितः
अष्टानामनुपूर्वेण भिन्नाभिन्नार्थवेदने १
प्रतिलोमप्रधिः प्रोक्तो दीपयेत् स्पर्शयेत् क्रमात्
चतुर्विंशत्तथावह्नित्रिक योगेन साधकः २
व्यंजनं च विसर्गस्थ मादावन्त उपाश्रितम्
अंततो बिन्दु संयुक्तमाकारेण तदेव तु ३
द्वाविंशत्यन्तरायुक्ता क्रूरेणैकादशेन च
ओकारं च वषट्कारं यदानै तद् दीप्यते ४
उंतस्थाश्चलाकान्ते संयोज्या इष्मणापि च
उत्तमस्पर्श युक्तानि सुषुम्नान्तर्गणो मतः ५
क्षुरिकाकर्तरी चैका लोकाचैकस्तथान्तगाः
प्रसवेयोजयेदेतत्प्रतिमंत्रंत्रिकं तु वै ६
तिस्रस्तिस्रस्तथा चैव मेकैकस्य पृथक्पृथक्
उर्द्धतस्य च वक्रादेर्योगः स्यात् प्रति निर्मितः ७
मंत्राणां साधनैः सूक्ष्माद् द्रव्याणां रक्षतः परत
प्राणानां चालने चैव नित्यं योज्याद्यनुक्रमात् ८
आसने क्षुरिकां दत्त्वा ततो मंत्रं प्रयोजयेत्
शलाका पूजने योज्यादत्त्वाचैवानुकर्तरी ९
अमेरर्चाविधानेषु दीपने चाभिषेचने
जपेत्था वैध्यानेषु मंत्रे च परमो विधिः १०
अमी बिल्वपलाशं च तथा दुर्वासितास्तिलाः
दर्भासुमनसां चैव गणाः स्याच्छान्तिकर्मणि ११
योज्या क्षीरेण च तथाप्यापुण्यवृक्षयोनयः

अवृक्षः किंशुको वृक्षो नित्यमेव धनप्रदः १२
करवीरः कनकश्चैव कलक्षेत्रं च दायकः
प्रियंगुलोध्र पुरायं च मृत्योस्तैलविपास्यता १३
शतपुष्पाणि बीजानि लवणं मांसमेव च
मल्लिकादिजपैः सर्वै योज्यः स्याद्धोमकर्मणि १४
काकोलूकस्य पक्षानि येषां द्वे पंच सर्वदा
द्वंद्वानान्तु तथा तेषाम् मृगजैर्द्वेवर्णा तरम् १५
विभीतकः खादिरश्च सहचरो वासकस्तथा
विद्वेषे तु तथा क्रूरे इत्थं तूच्चाटनेषु च १६
उक्ताः स्वल्पविधानेषु परतन्त्रेषु ये च वै
सर्वे तेनैव सिध्यन्ति विधियुक्तोदितैः परैः १७
अरसाबाह्यबीजं वा योज्याश्च सर्वकर्मणि
दृष्ट्वा तु विधिना मंत्रं व्योमस्थं वा महीगतम् १८
तत्सर्वं साधयेत्तूर्णं यदुक्तं कल्पकल्पकैः
न च शक्तिपरीचारे मंत्रान्ते क्रमशस्ततः १९
मंत्रं संपुटयोगेन साधयेच्च शलाकया
शक्रं तु कमले योगस्पर्शैः शक्ति निरावृतम् २०
क्षुरिका कर्त्तरी युक्ता दक्षिणा निर्वाणमावहेत्
अपिपंचक योगान्ते लिंगे वै स्थण्डलेऽथवा २१
लक्षत्रयस्य वै योगात् साधयेत् परमेष्ठिनम्
शिलातले तु वै श्रेष्ठ क्रियाकारणसाधकः २२
आदित्यस्य निमित्तात्स्वात्साधनं मुन्मिलोक्षिकम्
भूतेशं निशि वा घोरे वायुभक्षो जलाशितः २३
साधयेत् साधनायुक्तो देहे मंत्री च वै क्षणात्
बीजेशवर्षा सर्वेश्मशानभक्ष्य भोजनः २४
अपक्वाशीलाब्धप्रभुर्देही देहस्य साधने

अशीतसिकता ज्येष्ठे जपेत् सृष्टिं धृतप्लुतः २५
जपान्तेन दीपये मंत्री ह्यष्टशान्तिर्यथा शिवः
चरित्वा भस्मचर्यश्च भस्मशायी यवाशनः २६
भस्मना सिद्धिमाप्नोति भस्मनिष्ठः सुसाधकः
भास्करस्य व्रतं ह्यतदन्ते ह्युक्तं क्रमागतम् २७
क्रमात्संक्रमणं चैव क्रमाद्विद्येशतां व्रजेत्
संक्रमेद् देहमाक्षिप्य दृष्ट्वैवं क्रमयेत् परान् २८
इच्छया विचरेन् मंत्री व्रतान्ते बीजवर्त्मनि
यदुक्तां मंत्रकोष्ठे तु तस्मिन् छास्त्रेप्लनेवशः २९
कंदमूलफलं पत्रमखिन्नम् खिन्नमेव च
अशवतो विधिरुवतो यमष्टौ ग्रासानुपानयेत् ३०
भक्ष्यं वा विधिसंपन्नं मंत्रैः सम्पानवर्जितम्
पावकं विधिवत्सिद्धं कुर्य्यान् मंत्रस्य साधने ३१
पूजामंत्रस्य वै मंत्री संवत्सर तनुस्थितैः
व्योमस्थं वा तथाग्निस्थं कुर्यात्पूर्वमेनवै ३२
अनुलोमाद् द्वयं स्यात् सूरिका कर्मभेदिनी
कर्त्तरीकवचं धोरं शलाका यत्र एव च ३३
अर्गलास्तु शिरः सौम्यः स्वाकायनिः शिखा पराः
प्रतिमास्थाः परा एता ह्यष्टौ ताः शक्तियोनयः ३४
पूर्वपश्चिमयोश्चैव दक्षिणोत्तरयोस्तथा
विदिक्षु चानु पूर्वेण स्वारान् संपूजयेत् क्रमात् ३५
प्रत्यहं यजनं कुर्याद्रात्रौ वापि हि साधकः
द्रव्याभावे जपेनापि साधयेन् मंत्रतत्परः ३६
चतुष्कं साधयेन्नित्यमेकैकस्य पृथक् पृथक्
क्षुरिकादिशालाकान्तामर्गलां चैव साधकः ३७

इति श्रीसाम्बपुराणे ज्ञानोत्तरे एकाशीतितमोऽध्यायः ८१

## द्व्यशीतितमोऽध्यायः

अथातः परमं गुह्यं मंत्रसारसमुद्भवम्
यैर्व्याप्तमखिलं सर्वं मंत्रं वै स चराचरम् १
सामान्या सवसैवास्ते चराणांकः फलव्याधं समया तु मध्योऽमध्यो विविधोम् किं कासमनीनाम परम परम क्षुरिकास्क फट्ना अयथाना अयन्ताना अपवासि नोपिकिंषु महामुखो मामकर्त्तरी ॥ यः फट्संपा पीडा योगतश्च गायदानुचमाश्विगांगीगुं पंचक्रमेशा नाम शलाका ॥ परमेष्ठिनन्यैताध्यायन् प्रेतजिह्वा-मूलीयूपरम् ॥ दक्षिणा ॥ ततो हरा नाम योगशलाकार्कस्य चरणैताः ॥ फटन्तु मूल जाह्येषायह्वांगुददेशवायव्यादिन्द्ररोचनानाम क्षुरिका ॥ सर्वासां मंगला ह्येषा विरोधिनी नाडीनां चतुष्कला निरञ्जनस्य क्षुरिका सर्वमंत्रहृदया सर्वान् संक्रामयति ॥ सर्वतरैचस्यात्प्र-योनामंत्राणां कर्मणि करोति । लक्षक विंशके क्षूरिका मेताः समाप्ताः
ब्रह्मोवाच ॥
आलयः सर्वभूतानां लयनाल्लिंगमुच्यते
हृदि भावमिदं लिंगं सर्वजन्मवतां स्थितम् २
सदार्चयन्ति विद्वांसो भावपुष्पैर्हृदि स्थितैः
भावजैः सुमनोभिश्च तमर्चेन्नान्यजैर्बुध ३
ब्रह्माक्षरपदैर्दिव्यैर्जरामरणकारकैः
प्रफुल्लपद्म संस्थाने सुहृद्ये तिष्ठतो मुखे ४
हृदयं तु विजानीयाद्विश्वस्यायतनं महत्
तस्य तद्वचनं श्रुत्वा प्रत्युवाच महेश्वरः ५
शृणु यत्नेन वचनं पुष्पाणि कथयामि ते
अहिंसा प्रथमं पुष्पं तथा चेन्द्रियनिग्रहः ६
धृतिपुष्पं क्षमापुष्पं शौचं पुष्पं च पंचमम्
अक्रोधः षष्ठपुष्पं तु हीपुष्पं चैव सप्तमम्

सत्यं चैवाष्टमं पुष्पमेभिः प्रीयेत वै शिवः
एतान्यष्टौ च पुष्पाणि चाक्षयान्यव्ययानि च ८
एतानि भावतो येन प्रकल्पेन निवेदयेत्
एभिर्यस्तु सदा पुष्पैरर्चयेच्छिवमव्ययम् ९
उद्धाटच तु तमो द्वारं शिवं पश्येन्निरञ्जनम्
कृत्वायमैस्तु लिंगं वै प्रत्याहारैस्तु वैदिकम् १०
ध्यानधारणपुष्पैस्तु चार्चयेच्छिवमव्ययम्
शरीरे दीपयेदग्निंन्यासं कृत्वा तृणेन्धनम् ११
युँजयेदुग्दतान् दोषान् मनः कृत्वा सुनिश्चितम्
विस्तीर्णाद्वारणाच्चैव नासाग्रे चिन्सयेच्छिवम् १२
चिन्तयेच्च सदा ह्येवं कृत्वा पूजां तु देहजाम्
क्षणाद्ध्रस्वत्वमायांन्ति प्रकीर्णानीन्द्रियाणि च १३
शुद्धौ दोषस्तथा मंत्री ध्याय नत्रीनप लिप्यते
ज्ञानशुद्धस्तथा मंत्री विचरेद्विषयैरपि १४
भावग्राह्यं मनः कृत्वा बुध्वा भोक्तारमीश्वरम्
सदा समत्वमायाति सामान्यः सर्वगोचरः १५
इति श्रीसामबपुराणे ज्ञानोत्तरे द्व्यशीतितमोऽध्यायः ८२

त्र्यशीतितमोऽध्यायः

त्रिविधं त्रिविधाकारं त्रिविधं पंचसंस्थितम्
त्रिविधेन तु योगेन लभ्यते तत्त्वनिश्चलम् १
यस्य योगः स्मृतः शास्त्रे परे तु परमोद्भवे
लिंगं तस्य सदा योज्यं ज्ञानयोगाच्च कर्मतः २
अहिंसा च क्षमा चैव धृतिरिन्द्रियनिग्रहः
शौचमक्रोधनं सत्यं कर्मशास्त्रविदम्बरम् ३
शास्त्रज्ञा त्थयोगाच्च गुरुदारेषु किल्विषात्

मुक्तिस्तत्र विकल्पेन त्रिविधा परिकीर्तिता ४
आसने च तथापाने निश्वासोछासदृष्टिषु
त्रिषु वाप्यपचारेषु ज्ञानेन समता यदा ५
कारणानि निगृह्णीयाद्घटमानानि योगिनः
प्रसूते तु तथायोगः क्रीडन्ति विषयोरगैः ६
निरुद्धयदग्धावासस्य गुरुपूजा च सर्वदा
विनाविज्ञानयोगाभ्यां मृतस्य न विषर्ययः ७
कर्मयोगं तु विज्ञानात् प्रवृत्त सर्वदा दहेत् ८
ज्ञानेन केवलेनैष साधकः सर्वतश्चरेत्
आत्मना हि स भेदज्ञः सुखं भिन्नः समाचरेत् ९
प्रकृतिं पुरुषं चैव ज्ञात्वा ज्ञानी न तप्यते
तेषामुपरितः सूक्ष्मस्सर्वव्यापी शिवो व्ययः १०
विदित्वा ज्ञानबुद्धयन्तं जायते वेदवित्तमः
ततः स्वकरणैः कार्यं न योगेन च कर्मणा ११
आत्मनो ज्ञानमात्रेण वीक्ष्यते तु चराचरम्
प्रकृतौ पुरुषो लीनः पाशैस्तु प्रकृतिर्व्रता १२
परापरस्य ज्ञाता वै नरः कर्मपरित्यजेत्
प्रकृतेः पुरुषाश्चैव प्रज्ञानो परमो भवेत् १३
पुंमांसस्तेन मुच्यन्ते परावरविचारिणः
विपर्यये पुनस्तेषां पूर्वस्यां प्रकृतौ स्थिताः १४
एको यदि भवेज्जीवो बन्धः कस्य भवेत् पुनः
कैवल्यं च कथं पुंसां बंधः प्रधानिको यदि १५
अथ चेन्नित्यताबंधः पुंसस्तत्र निरर्थकः
तस्माज्ज्ञानधरो योगी सर्वदा सुखमश्नुते १६
तारके ज्ञानसंस्कारेण प्रभुर्बध्यते न क्वचित्
इच्छया चरते ज्ञानी योगी कालान्तरेण तु १७

दग्धे चैव तु पाशेऽस्मिन् गुरूणा शास्त्रमात्मना
अभिव्यस्तंरसं दिव्यं भूप्राप्तं गुरूसंस्मरेत् १८
एवं संज्ञानसंयोगाद्बाह्यपाशाद्विमुच्यते
न हिंसेदात्मात्मानं न हिंसेद्रिद्रियाणि च १९
यथाभागं तु वै युंज्यादन्यथा तु विपर्ययेः
दिशो पस्य तु वै श्रोत्रे जीवः श्रोत्रे व्यवस्थितः २०
स पश्येदात्मना शुद्धः परमात्मानमात्मना
त्यक्तवापुरिति प्रोक्तः स्पर्शस्तत्रात्मसंभवः
वायुश्च स्पर्शनं युक्तो स्पर्शनं त्वरितं जनः २१
चक्षुषा गृहये रूपं चक्षुरूपं समुद्भवम्
जायते शक्तितस्तेन परस्ते तेन लिप्यते २२
रसज्ञारसनाजिह्वा यस्तु वरुणात्मकः
आशश्च परतस्तत्र वरुणश्चात्र संभवः २३
पार्थिवस्तु तथा घ्राणे गंधस्तु पृथिवी गुणः
युक्तस्तु पुरुषो ह्यत्र न परः पृथिवीगतः २४
अग्निः सर्वमितिप्रोक्तः सर्वस्मिन्नात्मनि स्थितः
वायुरप्यत्र विज्ञेयो न परो लिप्यते तदा २५
इन्द्रियस्येन्द्रगोप्तृत्वाद्धस्तौ चेन्द्रेण संयुतौ
पुरुषः वपि संयुक्तो न परस्तेन लिप्यते २६
भोक्ता विष्णुश्च पापानामपानं स्थानमुच्यते
पुरुषः पादसंयुक्तस्त्रिधा वै विश्वतो मुखः २७
वायुर्वै वर्चसो मार्गस्समित्रो मित्र योगतः
पुरुषश्चात्र संयुक्तो न परः पुरुषो यथा २८
अनिन्दं नन्दयत्यस्य विश्वात्माऽसौ प्रजापतिः
उददेशान्मनसः श्रौतं परोपप्रस्थितो व्रजेत् २९
मनसश्चात्र विज्ञेयं यत्र चैवात्मनः स्थितिः

न परोनेन संयुक्तश्चान्द्रं रागीयतन्मनः ३०
अहंकर्त्तेत्यहंकारः स रौद्र पुरुषालयः
अहंकारेण संयुक्तो सौपरो नात्र युज्यते ३१
परं सर्वात्मकं ब्रह्म ज्ञान ब्रह्मेति बाध्यते
तेन बुद्धयत्यथो बुद्धिरज्ञानेन विपर्ययः ३२
त्रैविध्यमंतः करणे योभिजानाति तत्ववित्
दश च त्रीणि चैतानि यो विद्याद्धि स योगवित् ३३
एषां तत्वेन वैचात्मा नाभाव्यो भावचिन्तकैः
अभाव्यं भावयेद्भावं भावो भाव्यं न भावकैः ३४
भावस्य भावनाज्ञानात् प्रजानां चेद्विपर्ययः
त्रिंशकात्प्रभृति ज्ञानं स्याद्योगवित् भ्रमात् ३५
कर्मकृच्च विदित्वैतज्ज्ञात्वैतद्वै प्रमुच्यते
विस्तरेण तदा ज्ञेयं ज्ञानिनां दीक्षितेन च ३६
योगसाधनयोर्नित्यमविभ्रंशः प्रकीर्तितः
बहुपाशवृत्तोऽप्येष जीवः कर्मवशानुगः ३७
तद्योगात् स चरत्यत्र तद्योगात् केवलं भवेत्
संभवं प्रसवं चैव चालयं च पृथक्पृथक् ३८
करणान्याकृतिश्चित्तं त्रिकं च दशकं च तत्
तदेव भावयेच्छिन्नो ह्यच्छेद्यं छेद्यवित्तमः ३९
सर्वभावैरभाव्यं तद्भावयेच्छिवमव्ययम्
ज्ञानेन केवलेनास्य योगेनापि च भावयेत्
कर्मणि प्रकृते चपि क्वचिद्धयायंस्तु शास्त्रतः ४०

इति श्रीसाम्बपुराणे ज्ञानोत्तरे त्रयशीतितमोऽध्यायः ८३

## चतुरशीतितमोऽध्यायः

साम्ब उवाच

भगवन् प्राणिनः सर्वे कुष्ठरोगाद्युपद्रवैः
सदा हि पीडयमानास्ते तिष्ठन्ति मुनिसत्तम १
येन कर्मविपाकेन संभवन्ति महामते
तत्सवं श्रोतुमिच्छामि त्वत्तो ब्रह्म विदांवर २
नारद उवाच
व्रतोपवासैर्भानुर्नान्यो जन्मनि तोषितः
तेनैव हेतुना ते तु कुष्ठरोगादिभागिनः ३
साम्ब उवाच
तेषां रोगोपशमनं जायते च कथं मुने
तत्सर्वं श्रोतुमिच्छामि सत्यं सत्य वदस्य मे ४
नारद उवाच
शृणु साम्ब महाबाहो कर्तव्यं रविपूजनम्
यत्कृत्वा सर्वरोगेभ्यो मुच्यते नात्र संशयः ५
साम्ब उवाच
एतत्सर्वं त्वया ख्यातं बह्वर्थं श्रुति विस्तरम्
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ६
सूर्यमुद्दिश्यार्कदेयं पाठकाय महात्मने
येन तुष्येत्तु भगवान् भास्करः पापतस्करः ७
नारद उवाच
शृणु साम्ब महाबाहो कथायामि तवानघ
तमेव सूर्यं विज्ञाय पूजतित्वा यथाविधि ८
गंधपुष्पाक्षतैश्चैव धूपदीपैस्तथोत्तमैः
स्वर्णालंकार-वस्त्रश्च शिरोरत्न-विभूषणैः ९
प्रपूज्य सूर्य रूपं तं देयाच कपिला शुभा
गोधूम यवधान्यानि माषमुद्गीस्तिलांस्तथा १०
गजाश्वमहिषोर्दद्याद्रत्नानि विविधानि च

हिरण्यं रजतं चैव कांस्य ताम्रस्य भाजनम्  ११
दासदास्यौ तथा दद्याद् भूमिं सस्यवतीं तथा
पट्टवस्त्राण्यनेकानि दद्याद्वै शुद्ध मानसः  १२
निक्षुभा च तथा राज्ञी द्वे भार्ये च विवस्वतः
उद्दिश्य तानि देयानि वस्त्रालंकारणानि च  १३
एवं यः कुरुते भक्त्या स मर्त्योऽत्र महीतले
पुत्र पौत्रादि संयुक्तो हर्षनिर्भरमानसः  १४
भुक्त्वा तु सकलान् भोगान् सूर्यलोके महीयते
अष्टादशपुराणानां श्रवणे यत्फलं लभेत्
तत्फलं समवाप्नोति सत्यं सत्यं वदाम्यहम्  १५

इति श्रीसाम्बपुराणे वशिष्ठबृहद्बलसंवादे
चतुरशीतितमोऽध्यायः  ८४
शुभं भवतु
समाप्तोऽयं ग्रन्थः

Reference:

Tripāthī, Shrīkriṣnamaṇi, ed., *Sāmbapurāṇam (Upapurāṇam)*, Varanasi: Krishnadas Academy, 1983.